# कादम्बर्यां प्रतिबिम्बितः राजधर्मः

**Prof. Chandrakala R. Kondi**

Sahitya Dept.

Central Sanskrit University

Shri. Raghunath KIrti Campus,

Devaprayag

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।**
**नास्ति येषां यशः काये जरामरणजं भयम् ॥[1]**

इति कविजनानाम् अमरत्वं प्रतिपादितं भर्तृहरिणा नीतिशतके । काव्यशास्त्रविदा आनन्दवर्धनाचार्येणापि —कालिदासादयः पञ्चषाः महाकवयो गण्यन्ते' इत्युक्तम् । तेनोक्तेषु पञ्चषेषु महाकविषु गद्यकाव्यचक्रवर्ती महाकविर्बाणभट्टोऽवश्यमन्तर्भवति । 'बाणोच्छिष्टं जगत्सर्वम्' इत्येषैवोक्तिः तस्य महाकवित्वं समर्थयति ।

'न खलु धीमतां कश्चिदविषयो नाम' इत्येतत् यद्यपि अभिज्ञानशाकुन्तले ऋषेः कण्वस्य विषये उक्तं तथापि ऋषिर्दर्शनादिति व्युत्पत्त्या अन्तश्चक्षुषा लोकं पश्यन्तः कवयोऽपि ऋषय एव । नानृषिः कुरुते काव्यमित्येतदपि वाक्यं तस्य प्रमाणम् । कोषे — सङ्ख्यावान् पण्डितः कविः । धीमान् सूरिः — इत्यादिषु विदुषां नामसु कवेः धीमत्त्वं प्रतिपादितमस्ति । अतः इदं वाक्यं शतांशेन कविषु अन्वेतीत्यत्र तैर्विरचितानि काव्यान्येव प्रमाणम् । तेषाम् अन्तर्दर्शनमेव लोकेभ्यः तान् पृथक्करोति । यत् लोकाः बाह्यचक्षुषा पश्यन्ति तदेव कवयः अन्तश्चक्षुषा पश्यन्ति । अत एव लोकैः स्थूलतया दृष्टं जगत् कविभिः सूक्ष्मतया अवलोक्यते । तेभ्यः कविभ्य इदं जगत् स्वस्य सर्वमपि रहस्यम् उद्घाट्य दर्शयति । तथा सूक्ष्मतया दृष्टान् विचारान् वर्णनविषयान् कृत्वा काव्यमयम् एकं रमणीयं जगदेव सहृदयानां पुरत उपस्थापयन्ति कवयः । कवीनां काव्यस्य अविषय इति किमपि नास्त्येव । लोके वर्तमानं सर्वमपि तत्र विषयत्वं प्राप्नोति । न केवलं तावदेव, अपि तु कवीनां लोकानुभवोऽपि तत्र सन्दर्भानुगुणं वर्णनविषयो भवति । एतत्सर्वमपि

---

[1] भर्तृहरिः, नीतिशतके

महाकविना कालिदासेन मालविकाग्निमित्रनाटके 'त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते' इत्यनेन वाक्येन प्रतिपादितम् । एते सर्वेऽपि विचाराः महाकवेः बाणभट्टस्य सङ्गच्छन्ते । गद्यकाव्यचक्रवर्ती बाणभट्टः यद्यपि स्तोत्रकाव्यनाटकादिष्वपि कृतपरिश्रम एव तथापि कादम्बरी हर्षचरितञ्चेति गद्यकाव्यद्वयं तस्य कीर्तिशरीरमिव वर्तते । तत्रापि तस्य यशः कायस्य मुकुटायते कादम्बरी 'कादम्बरीरसज्ञानामाहारोऽपि न रोचते इत्युक्त्या अस्य काव्यस्य रमणीयता कीदृशी स्यादिति ऊहितुं शक्यम् । आख्यायिकायाम् ऐतिहासिककथावस्तु भवतीति हेतोः स्वकल्पनायाः, स्वानुभवप्रतिपादनस्य च तावानवसरः न लभ्यते, किन्तु कथायां तस्य प्रभूतोऽवसरः । एतदाधारेणापि हर्षचरितापेक्षया बाणभट्टस्य कादम्बरी एव विशिष्यते । कथारूपेऽस्मिन् काव्ये बाणभट्टः 'लोकोत्तरवर्णनानिपुणः कविः' इत्येतत्, तथैव 'शक्तिर्निपुणताऽभ्यासश्चेति त्रयः समुदिताः काव्यहेतुरित्येतच्च मम्मटाचार्योक्तं प्रतिपदं सार्थकयन्निव स्वस्य लोकोत्तरवर्णनानैपुण्येन सहृदयान् विगलितवेद्यान्तरानन्दनिमग्नान् करोति । यद्यपि काव्यमिदं विप्रलम्भशृङ्गारप्रधानं तथापि बाणमहाकवेः अगाधं लोकज्ञानं, हिताहितविवेकः, धर्मज्ञता, जीवनदर्शनम् इत्यादय बहवो विचारास्तत्र सान्दर्भिकतया अनन्यसाधारणतया च निबद्धाः सन्ति । तत्र राजसम्बद्धाः धर्माः नीतयश्च अन्यतमत्वेन प्रतिपादिताः वर्तन्ते ।

वाग्देवतावतारेण मम्मटाचार्येण काव्यप्रयोजनेषु कान्तासम्मिततया 'रामादिवद्वर्तितव्यम्, न रावणादिवत्'[2] इत्युपदेशोऽपि अन्तर्भावितः । महाकवेः कालिदासस्य काव्येषु 'रामादिवद्वर्तितव्यम्' इत्येतदेव अर्थात् राजधर्मः प्राधान्येन प्रतिपादितः रघुवंशे दिलीपादीनां राज्ञां चरित्रचित्रणे । किन्तु अग्निवर्णः रावणादिवन्न वर्तितव्यमित्यस्य निदर्शनम् । बाणमहाकविरपि एनामेव पद्धतिमनुसरति कादम्बर्याम् । शूद्रक- तारापीडादीनां विलासमयं जीवनमेव प्राधान्येन वर्णयित्वा तत्रैव तैरनुसृतं राजधर्ममपि वर्णयति । तत्र रामादिवद्वर्तितव्यमित्यनेन मार्गेणैव स धर्मः प्रतिपादितः । किन्तु शुकनासोपदेशे लक्ष्म्या ग्रस्तानां राज्ञां वर्णने 'रावणादिवन्न वर्तितव्यम्' इत्येष एव मार्गो सम्पूर्णतयाऽनुसृतः ।

राज्ञः शूद्रकस्य वर्णनेनैव कादम्बरी आरभ्यते । अस्य राज्ञः बहूनि विशेषणानि कविना दत्तानि । तत्र यद्यपि राज्ञः अप्रतिहतं सामर्थ्यमेव तस्य वर्णनविषयः तथापि राज्ञा स्वप्रजासु, सामन्तनृपेषु च कथं भाव्यमिति उक्तमस्ति । अशेषनरपतिशिरः समभ्यर्चितशासनः स शूद्रकः आसीत् ।

---

[2] काव्यप्रकाशः-१/२ वृत्ति

सर्वेऽपि सामन्तनृपतयः तस्य शासनं शिरसा वहन्ति । असमर्थस्य राज्ञः एतत् सम्भावयितुमपि न शक्यते । कदाचित् राजा स्वसामर्थ्ये गर्वितः सन् अधर्ममार्गे गच्छति । किन्तु एतन्न करणीयं राज्ञा । यतः

यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

इत्युक्तेरनुसारं 'यथा राजा तथा प्रजा' इत्युक्तेश्च राज्ञा यस्मिन् मार्गे गम्यते तस्मिन्नेव मार्गे गम्यते प्रजाभिरपि निःशङ्कया । राज्ञा सर्वथापि सन्मार्ग एवाश्रयणीयः । सः धर्ममनुसरति चेत् प्रजा अपि अनुसरन्ति । सः क्षमामयः भवति चेदपि अपराधानां विषये कोपः प्रदर्शनीय एव । नो चेत् राज्ञः भयं न भवति प्रजानाम्, येन ते निर्भीकाः वाममार्गे गच्छेयुः । सः राजा शास्त्रज्ञः भवेत्, येन सन्मार्गः सुस्पष्टः भवेत् । शूद्रके एते सर्वेऽपि गुणाः आसन् ।

यश्च मनसि धर्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, प्रज्ञायां सुरगुरुणा[3] इत्यादिरीत्या बाणकविस्तं वर्णयति । तस्य धर्ममार्गानुगमनेन तस्य प्रजासु वर्णसङ्करः, केशग्रहः, दृढबन्धाः, चिन्ता, विप्रलम्भः, कनकदण्डः, प्रकम्पः, मदविकाराः, गुणच्छेदाः- इत्यादयः दोषरूपेण सर्वथा नासन्, किन्तु गुणरूपेणैव । एतत्तु कविना चित्रकर्मसु वर्णसङ्कराः, करिषु मदविकाराः इत्यादिना रमणीयतया वर्णितमस्ति । राज्ञा धर्मः स्वयमाचर्य दर्शनीयम्, न तु धर्मविषये प्रजाः वाचा केवलमुपदेष्टव्याः इत्येष प्रधानः राजधर्मः शूद्रकस्य चरित्रचित्रणे प्रत्यपादयत् बाणभट्टः ।

एष एव राजधर्मः अन्यरीत्या तारापीडस्य वर्णने दृश्यते । तमेवं वर्णयति कविः प्रथमतया- नल- नहुष-ययाति-धुन्धुमार-भरत -भगीरथ- दशरथप्रतिम इति । एते सर्वेऽपि आदर्शभूताः राजानः इति सर्वे जानन्त्येव । एतेषां समेषामपि सादृश्यं तस्यासीत् । सः भुजबलार्जितभूमण्डलः, फलितशक्तित्रयः, मतिमान्, उत्साहसम्पन्नः, नीतिशास्त्राखिन्नबुद्धिः, अधीतधर्मशास्त्रः । सः सत्यस्य प्रभवः आसीत् । एवं स्वयं सत्यं परिपाल्य प्रजास्वपि तत् प्रतिष्ठापयामास । बाणकविः तारापीडस्य विशेषणद्वयमेवं दत्तवान् यत्, अवतार इव धर्मस्य, प्रतिनिधिरिव पुरुषोत्तमस्य इति च । पुरुषोत्तमः विष्णुः, जगतः पालकः, तस्य प्रतिनिधिरित्युक्तत्वात् तस्य प्रजापालनदक्षता व्यज्यते । यतः प्रजानां सम्यग्रूपेण परिपालनमेव

---

[3] कादम्बरी-शूद्रकवर्णने

राज्ञः प्रथमो धर्मः, प्रधानधर्मश्च । एवं तस्य सर्वसामर्थ्यं दृष्ट्वा राजलक्ष्मीः क्षणमपि तं न त्यक्तवती। लोकोऽपि तस्य चरितम् उपदेशमिव जग्राह मङ्गलमिव बहुमेने, मन्त्रमिव जजाप, आगममिव न विसस्मार इति प्रजासु राज्ञा कथं स्वप्रभावः प्रसारयितव्यः इत्येतत् सुष्ठु प्रतिपादयति कविः ।

राज्ये राज्ञः दायित्वं यथा भवति तत्समानतया एव भवति अमात्यस्य दायित्वमपि । राज्ञः अनुपस्थितौ अमात्येनैव राज्यधुरं वोढव्यमापतति । राजामात्ययोः तादृशसम्वन्धं विना राज्यस्योन्नतिः अशक्यैव । राजामात्ययोः योगः कथं भवेदिति किरातार्जुनीयमहाकाव्ये महाकविः भारविः वदति-

स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।
सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥[4]

इति । एतादृशमन्यादृशं योगं तारापीडस्य तस्य प्रधानामात्यस्य शुकनासस्य च आसीत् । राज्ञा यदा वैयक्तिकविषयेषु अनिवार्यतया प्रवर्तितव्यं भवति तदा राजा राज्यधुरं प्रधानामात्यानां स्कन्ध एवारोप्य गच्छति । रघुवंशे सन्तानकामः दिलीपः तथैव कृत्वा पुत्रलाभोपायं चिन्तितुं वसिष्ठाश्रमं गतवान् । तादृशसन्दर्भे तैरमात्यैः राज्ञः प्रतिनिधिरूपेण राजधर्मः पालनीयो भवति । अतः तेषामपि दायित्वं महत् । अतः राज्ञा कथं भाव्यम् इत्यनेन सह अमात्येन कथं भाव्यमित्येतदपि राजधर्मस्य एकमङ्गमेव । राजा वाममार्गे गच्छति चेदपि अमात्येन सः सन्मार्गे आनेतव्यः। अतः राजसमानं सामर्थ्यं अमात्यस्यापि भवेत् । एतत्तु कादम्बर्यां शुकनानस्य चरिते वयं पश्यामः । कदाचित् विलासमग्नस्य तारापीडस्य दृष्टिः राज्यविषयाच्च्युता भवेत्, किन्तु शुकनासस्य दृष्टिः एकं क्षणमपि न स्वकर्तव्यात् प्रमाद्यति । तं शुकनासं तथा वर्णयति कविः, यथा सर्वोऽपि राजधर्मस्तस्मिन्नेवाश्रयं प्राप्तवानिति -

निखिलशास्त्रकलावगाहगम्भीरबुद्धिः, आशैशवात् उपारूढनिर्भरप्रेमरसः, नीतिशास्त्रप्रयोगकुशलः, भुवनराज्यभारनौकर्णधारः, महत्स्वपि कार्यसङ्कटेषु अविषण्णधीः, धाम धैर्यस्य, स्थानं स्थितेः, सेतुः सत्यस्य, गुरुः गुणानाम्, आचार्य आचाराणाम्, धाता धर्मस्य, शेषाहिरिव महीभारधारणक्षमः, सलिलनिधिरिव महासत्त्वः, जरासन्ध इव घटितसन्धिविग्रहः, त्र्यम्बक इव प्रसाधितदुर्गः, युधिष्ठिर इव धर्मप्रभवः, सकलवेदवेदाङ्गवित्, अशेषराज्य-

[4] किरातार्जुनीयम्-१/५

मङ्गलैकसारः इति । एत एव खलु गुणाः राजनि भवितव्याः । एतेषु तस्य विशेषणेषु 'शेषाहिरिव महीभारधारणक्षमः' इत्येकेनैव विशेषणेन अलं, सः न केवलममात्यः किन्तु राजाऽपि भवितुं योग्यो वर्तत इति वक्तुम् । शासितुः राज्ञः यादृशी योग्यता अपेक्षते तदितोऽप्यधिकतया अमात्ये भाव्यमित्येष विचारः शुकनानस्य चरिते प्रतिपादितो वर्तते ।

राजानः काले काले उपदेष्टव्या भवन्ति अमात्येन । अतः राज्ञोऽपि उपरि एव तिष्ठति सः । तादृश उपदेशः यदि तेन न दीयते तर्हि सः दुर्मन्त्री । तादृशः अमात्य एव 'किंसखा' इत्यनेन पदेनोक्तः भारविमहाकविना । राजनिष्ठस्य सर्वसमर्थस्य अमात्यस्य उपदेशं यः राजा न शृणोति सः 'किम्प्रभुः' अर्थात् दुष्टः राजा भवति । भारवेः अयमभिप्रायः बाणभट्टस्यापि सम्मत एव । सदापि अमात्यस्य मनसि राज्यस्य राज्ञश्च हिताकाङ्क्षा एव भवेत् । अतः शुकनासः तारापीडस्य विषये कथमासीदिति सः वर्णयति-

बृहस्पतिरिव सुनासीरस्य, कविरिव वृषपर्वणः, वसिष्ठ इव दशरथस्य, विश्वामित्र इव रामस्य, धौम्य इवाजातशत्रोः, दमनक इव नलस्य सर्वकार्येषु आहितमतिः अमात्यो ब्राह्मणः शुकनासो नाम आसीत् इति । अत्र अत्यन्तं स्पष्टमेव वर्तते यत् अमात्यः राज्ञः गुरुस्थानीय इति । एवं तारापीडमपि अतिक्रम्य तिष्ठति सः राजधर्मानुसरणे । तारापीडः स्वस्य पुत्रस्य चन्द्रापीडस्य विद्याभ्यासपरिसमाप्तेरनन्तरं तं युवराजपदवीमारोहयितुं सर्वामपि सिद्धतां करोति । तदा राजनीतिनिपुणः, राजभक्तः, प्रजावत्सलः, धर्मज्ञः, प्रधानसचिवः शुकनासः द्रष्टव्यः, येन शुकनासस्य अनितरसाधारणतया दीयमानेन मार्गदर्शनेन राज्ञां ललामभूतस्य तारापीडस्य उत्तरदायित्वं वोढुं योग्यतां सम्पादयेयं, तथा सुशिक्षितो भवेयम् इति चिन्तितं चन्द्रापीडेन । तदर्थं शुकनासस्य दर्शनार्थम् आगतं चन्द्रापीडं प्रति 'राज्ञा कथं भाव्यमिति तथा उपदेश विहितः शुकनासेन, येन न केवलं राजानः किन्तु सामान्यजना अपि जीवनमार्गम् आत्मसात्कर्तुं शक्नुयुः ।

यथा मया पूर्वमेव उक्तं यत् रावणादिवन्न प्रवर्तितव्यम् इति शुकनासोपदेशे कविना दर्शितमिति, तदिदानीं पश्यामः । तत्र प्रधानतया लक्ष्म्याः, अर्थात् अर्थपर्यायस्य धनस्य सर्वोपरि प्रभुत्वात्मकं सामर्थ्यं, तस्या अधीनानां राज्ञां धर्ममार्गभ्रष्टता निरूपितं शुकनासेन । जीवननिर्वाहार्थं धनमपेक्षत एव सर्वेषाम् । तत्र कमपि दोषमपश्यन्त एव धर्मशास्त्रज्ञाः पुरुषार्थेषु तस्य स्थानमकल्पयन्। किन्तु तद्धनं धर्ममार्गेणार्जितं भवेदित्यस्मादेव हेतोः अर्थापेक्षया धर्मस्य प्रथमं स्थानं दत्तमस्ति । यदि कश्चन जनः धर्ममार्गात् प्रमाद्यति, अधर्माच्चार्थमार्जयति तदा सः

सर्वविधेनापि अधः गच्छति । लोकास्तु सामान्यजनाः, लक्ष्म्याः कपिमुष्टौ बद्धाः स्वयं विनाशं प्राप्नुवन्ति । किन्तु यदि प्रजापालकस्थान उपविष्टाः राजानः लक्ष्म्याः एतादृशप्रभावग्रस्ता भवन्ति तर्हि सर्वथाऽपि महती हानिः सञ्जायते राष्ट्रे । अनया ग्रस्ताः राजानः कीदृशाः भवन्ति, कथं सर्वमपि विनाशयन्ति, स्वयमपि विनश्यन्ति इति एवं वर्णयति शुकनासः-

१. चञ्चलतमां लक्ष्मीं प्राप्य राजानः विह्वलाः भवन्ति, सर्वविधदुराचारादीनाम् आस्पदतां च प्राप्नुवन्ति (दुराचारसम्पन्नाः भवन्ति)। तेन राजानमेवानुसरन्त्यः प्रजा अपि तमेव मार्गमनुसरेयुः ।

२. राज्याभिषेकसमये मङ्गलघटैः अभिषेकार्थं राज्ञां शिरसि पातितानि जलानि प्रजासु तेषाम् आनुकूल्यं प्रक्षालयन्तीव भाति । (अन्येषां कष्टं ज्ञातुमसमर्थाः भवन्ति)। प्रजानां कष्टं ज्ञातुं मनः भवेत् राज्ञः । किन्तु लक्ष्म्या ग्रस्ताः प्रजानां कष्टमजानन्तः तेषां सम्यक्परिपालनं कर्तुमसमर्था एव तिष्ठन्ति । अभिषेकाङ्गभूतात् हवनात् उत्थितः धूमः तेषाम् अन्तःकरणं कलुषीकरोतीव (तेषामन्तःकरणं दुर्भावनाभिः दूषितं भवति) ।

३. नकारात्मकशक्तीः प्रसारयितुं वीजनार्थं पुरोहितैः उपयुज्यमानैः दर्भैः तेषां राज्ञां क्षमागुण एवापसार्यते इतीव क्षमागुणविहीनाः सन्तः क्रूराः भवन्ति ।

४. क्षौमवसनरचितं शिरोवेष्टनम् आवृणोतीव राज्ञा वृद्धावस्थाऽऽगमनस्मृतिम् । अहं सदा एवमेव युवावस्थायामेव भवामि, जरा मां नोपसर्पतीति चिन्तयन्ति ।

५. राजच्छत्रस्य मण्डलेन लोकान्तरदृष्टिः निवार्यते इव। भूलोक एव न, किन्तु अन्येऽपि लोकाः सन्ति, इदानीं यद्यस्माभिः दोष आचर्यते तर्हि मरणानन्तरम् उत्तमलोकाः न प्राप्यन्ते इत्यादि चिन्तनमेव न उदेति तेषां मनसि । केवलमयं लोकः अत्रस्थानि सुभोपभोगादीन्येव दृश्यन्ते ।
भवति ।

६. व्यजनवायुभिः याथार्थ्यम् उद्धूयते इव तिरस्क्रियते । यथार्थं, वास्तवं, सत्यं दूरे

७. वेतसयष्टिभिः अपसार्यन्ते इव शौर्यादयो गुणाः (शौर्यादिगुणाः दूरीभूय शूराणामसहजा प्रवृत्तिः, कापुरुषयोग्यप्रवृत्तिर्जायते) ।

८. जयशब्दकोलाहलैः तिरोभूयन्ते इव हितप्रदानि वचांसि (केवलं स्वात्मानमुद्दिश्य क्रियमाणः जयघोष एव श्रूयते तैः कर्णानन्दकरत्वात्, किन्तु हितकाङ्क्षिभिरुच्यमानानि हितवचनानि न श्रूयन्ते ) । गुरुजनान्, बन्धुजनान् हितकाङ्क्षिणश्च विमानयन्ति । दुश्चारित्र्येण विद्यादायिनं गुरुं क्लेशभाजनं कुर्वन्ति ।

९. पताका-वस्त्रोपान्तैः परामृश्यते इव कीर्तिः (अपकीर्तिः प्राप्यते) ।

१०.दूरोड्डयनेन परिश्रान्तपक्षिणां ग्रीवाप्रदेशवत् चञ्चलाभिः खद्योतावभासवत् क्षणं मनोहराभिः विद्वज्जनैः निन्दिताभिश्च विभूतिभिः विमुह्यमानाः अल्पैश्वर्यस्यापि प्राप्तिगर्वेण स्मृतिपथापनीताः 'का मे जननी को तातः कोऽहं सम्प्रति कुत आयातः' इत्याकारजन्मवृत्तान्ताः, कफ-पित्त-वात-विकृतिभिः वृद्धिं गतेन दूषितेन रुधिरेण इव कामादिदोषैः प्रवृद्धवनितादि-विषयानुरागैः पीड्यमानाः, पञ्चसङ्ख्यकैरपि शब्दस्पर्शादिबहुविधरसलोलुपत्वात् अनेकसहस्र-सङ्ख्यकैरिव इन्द्रियैः अजस्रं व्याप्रियमाणाः, चापल्येन हेतुना लब्धावकाशेन एकेनापि चित्तेन सहस्रसङ्ख्यकत्वमुपगतेन इव व्यग्रीभूताः सन्तः केचन महाराजाः व्याकुलतामुपगच्छन्ति । मन्मथवाणैः ताडितमर्मदेशाः ते राजानः आननविकृतिसहस्राणि घटयन्ति इव । सम्पदुष्मणा पाकविषयीक्रियमाणाः ते विविधां चेष्टां कुर्वन्तीव । लगुडादीनां तीव्राघातेन परिक्षताः सन्तः स्वकीयान्यपि हस्तपादादीनि स्वयमपि वोढुं न शक्नुवन्तीव ।

यथा कर्कटाः वक्रीभूय गच्छन्ति तथैव राजानोऽपि सर्वैः सह कौटिल्यं व्यवहरन्ति । यथा पापेन विनष्टगमनशक्तयः खञ्जाः बन्धुवर्गाणां हस्तालम्बनादिसाहाय्येन गमनं कुर्वन्ति, तथैव विधेयमार्गे दुष्कर्मणा नष्टप्रवृत्तयः सन्तः तेऽपि अन्यैः सञ्चाल्यन्ते । यथा विषविकारजनितेन मुखरोगेण हेतुना लोकाः महता कष्टेन निगदन्ति, तथैव मिथ्याभाषणेन हेतुना राजानोऽपि कष्टेन वदन्ति । एवंरीत्या बाणभट्टेन राज्ञां दोषाणां प्रतिपादनद्वाराऽपि राजनीतिः निरूपिता ।

चन्द्रापीडं प्रत्युपदेशावसरे राजसम्बद्धः कोऽप्यंशः त्यक्तश्चेत्तदपि पूर्णं भवत्विति विचारं चिन्तयन्निव शुकनासः एतत्सर्वमुक्त्वापि राज्ञा कथं भवितव्यमिति स्पष्टरूपेण चन्द्रापीडं प्रति वदति-'अतिकुटिलकष्टचेष्टादारुणे राज्यतन्त्रेऽस्मिन् महामोहान्धकारिणि च यौवने कुमार ! तथा प्रयतेथाः यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः' इति सन्मार्ग एव सदा गन्तव्यमित्युक्तम् । पुनः दुर्मार्गे न

गन्तव्यमित्यपि एवं प्रतिपादयति-यथा च न प्रकाश्यसे विटैः, न प्रहस्यसे कुशलैः, नास्वाद्यसे भुजङ्गैः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्तैः, न प्रलोभ्यसे वनिताभिः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे रागेण, नापह्रियसे सुखेन । अनेन राज्ञा सदापि जागरूकेण भाव्यमिति सुस्पष्टतया निगदितमस्ति । प्रायः एतस्मात् परं कोऽपि राजधर्मस्यैकोऽप्यंशो नावशिष्यते इति भाति । धर्मशास्त्रकारैः ये ये राजधर्मा निरूपिताः ते सर्वेऽपि बाणमहाकविना शूद्रकादिनृपाणां चरिते, शुकनासस्य वचसि च सोदाहरणमिव प्रतिपादिताः सन्ति । शम् ।

# श्रीहर्षस्य महाकाव्ये शैक्षिकचिन्तनम्

डा .अनिलकुमारः

संस्कृतमहाकाव्यपरम्परायामद्वितीयं स्थानं विद्यते श्रीहर्षप्रणीतस्य नैषधीयचरितस्य यतोहि विदुषाङ्कृते प्रसिद्धेयमुक्तिस्तस्मिन् विषये एव भणन्त्याचार्याः-नैषधं विद्वदौषधम्, उदिते नैषधे काव्ये क्व माघ क्व च भारविरिति। तदेव नूतनमपि काव्यमिदम्प्रतिभाति- काव्यं नवं नैषधमिति वचनात्। कविः स्वकाव्ये यानि वर्णनीयवस्तूनि समावेशयति तानि व्याजेन समाजम्प्रति किमपि द्योतयन्त्येव, कदाचित् कान्तासम्मिततयोपदेशाय कदाचिद् व्यवहारविदे, तत्रापि सर्वं प्रतिपादनस्य मूलमुद्देश्यं रामादिवद्वर्तितव्यं न तु रावणादिवदित्येव सिद्धयति। यतोहि तेनोपदेशेनैव समाजस्य विकासो भवति। स चोपदेशो मोक्षैकहेतुः यथोक्तम्-'या विद्या सा विमुक्तये'। शिक्षाया वास्तविकस्वरूपपरिज्ञानेन समाजे परिवर्तनम्भवति। आधुनिकसमाजे तादृशी शिक्षा नैव दीयते यस्मात्कारणादद्य अस्माकं सम्मुखे भयावहसमस्या दृश्यन्ते आचरणे तां वास्तविकीं शिक्षां धारयितुमद्य नैव को{पि प्रयतते। परञ्चास्माकं प्राचीनमहाकाव्येषु न केवलं तादृश्याः शिक्षायाः स्वरूपम्, अपितु तस्या विस्तारोऽपि सम्यक्तयावलोक्यते। शिक्षापञ्चकमित्यनेन शिक्षायाः स्वरूपमर्थोद्देश्यपाठ्यक्रमविधिमूल्याङ्कनानि शैक्षिकतत्त्वान्तर्गतानि समागच्छन्ति परञ्च तत्कालीनशिक्षाव्यवस्था, विद्यालयस्य स्वरूपम्, अध्यापकः, छात्रः, गुरुशिष्यसम्बन्ध इत्येषामपि समावेशं तत्रैव कुर्वन्ति केचन शिक्षाशास्त्रिणः। नैषधीयचरितमहाकव्ये श्रीहर्षेण शिक्षायाः स्वरूपं ग्रन्थादौ यादृशं प्रतिपादितं तादृशमधुना पर्यन्तमपि नैव केनापि परिभाषितम्-

अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः।

चतुर्दशत्वं कृतवान् कुतस्स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ [1]

अर्थात् यथा शिक्षाशास्त्रे श्रवण-पठन-लेखन-वाचनादिनि कौशलानि निरूपितानि, यथा चार्षग्रन्थेषु श्रवण-मनन-निदिध्यासनानि च निगदितानि तथैवात्रपि। यथा मल्लिनाथेन व्याख्यतम्-' चतुर्दशसु विद्यासु-अङ्गानि वेदाश्चत्वारो मींमासान्यायविस्तरः। धर्मशास्त्रं पुराणञ्च

[1] नै.च-१/४

विद्या ह्येताश्चतुर्दशे'त्युक्तासु अधीतिरध्ययनं गुरुमुखात् श्रवणमित्यर्थः। बोधः, अर्थावगतिः, आचरणं तदर्थानुष्ठानम्, प्रचारणम् अध्यापनं शिष्येभ्यः प्रतिपादनमित्यर्थः)तत्रैव टीकायाम्(। अत्र शिक्षाया यत्स्वरूपं समीक्षितं तन्नूनमेवावधारणीयम्। किञ्च-

स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्तु या।

स्वरभेदमुपैति या कथं कलितानल्पमुखारवा न वा ॥ [2]

अत्र वर्णस्थानोच्चारणादीनां विषये सङ्केतयति कविः। शिक्षाया वस्तुतः किमुद्देश्यं तस्मिन् विषये बहूनि पद्यानि समीक्षामाध्यमेन दृष्टिपथमायान्ति-

अथवा भवतः प्रर्वत्तना न कथं पिष्टमियं पिनष्टि नः?

स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता ॥ [3]

यथा ज्ञानस्य स्वत एव प्रमाण्यं सिद्धयति तथैव कामपि प्रेरणां विना सज्जनाः परोपकारिणो भवन्ति। अत्र ज्ञानस्य विषये मींमासकानां सिद्धान्तः स्वत प्रमाण्यम्, किञ्च विदुषां ये शिक्षाया वास्तविकमुद्देश्यं जानन्ति तेऽपि तत् ज्ञानसदृशमेव स्वत एव परोपकारं कुर्वन्ति। यथा विभिन्नमार्गाणामेकं लक्ष्यं ज्ञानप्राप्तिः वर्तते तथैव योगिनामपि लक्ष्यं प्राप्तिरेव-

नेत्राणि वैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि।

प्रापुस्तमेक निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ॥[4]

यथा आहारस्तथैव व्यवहारस्तेनानुरूपं वपुः। पुराकाले यथा मनीषिणामाहार आसीत्पवित्रन्तथैव तेषां ज्ञानमपि। ज्ञानानुकूलं मानवानां कार्यमपि भवति-'अन्नानुरूपां तनुरूपदृद्धिं कार्यं निदानाद्धि गुणानधीते'[5] । सर्वेषु प्राणिषु समदृष्टिरेव कदाचित् शिक्षाया लक्ष्यमुद्देश्यं वा सर्वोपरि आसीदिति- 'हंसोऽपि देवांशतयाऽभिवन्द्यः श्रीवत्सलक्ष्यमेव हि मत्स्यमूर्तिः। [6] इत्यनेन हंसोऽपि देवस्य भावेन ज्ञायते। तत्त्वमसीत्यत्र तदिति ओघङ्कारररूपम्, तमेव प्रणवो वेदश्च जना वदन्ति -

मदन्यदानं परिकल्पना वा वेदस्त्वदीये हृदि तावदेषा।

---

[2] नै.च. २/९८
[3] नै.च. २/६१
[4] नै.च. ३/३
[5] नै.च. ३/१७
[6] ३/५७

निशोऽपि सोमेतरकान्तशङ्कामोङ्कारमग्रेसरमस्य कुर्याः ॥ [7]

अत्र मल्लिनाथो वदति-'निशो निशाया अपि 'पद्दान्नित्यादिना निशादेशः सोमच्चन्द्रादितरकान्तशङ्कां पुरुषान्तरकल्पनामेव ओङ्कारं प्रणवम् अस्य वेदस्याग्रेसरमाद्यं कुर्या कुरु सर्वस्यापि वेदस्य प्रणवपूर्वकत्वादिति भावः' । एवमन्यत्रापि शिक्षोद्देश्यान्यत्र विद्यमानानि वर्तन्ते। पाठ्यक्रमोऽपि विस्तृतरूपेण मुख्यतया च शिक्षायां भूमिकां निर्वहति यत्र च सर्वे विषयाः समागच्छन्ति। नैषधीयचरिते श्लिष्टप्रयोगादतिरिक्तं व्याकरण-न्यायवैशेषिक-साङ्ख्य-योग-वेदान्त-मींमासा-चार्वाक-बौद्ध-जैनादि दार्शनिकसिद्धान्तानां समावेशः श्रीहर्षेण कृतः। तत्रदौ व्याकरणं यथा-

'क्रियते चेत् साधु विभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया।

या स्वौजसां साधयितुं विलासैस्तावत्क्षमा नामपदं बहु स्यात्' ॥ [8]

अत्र विभक्तीनां प्रयोगविषये। पाणिनेरपवर्गे तृतीयेत्यस्मिन् सूत्रे अपवर्गस्य मोक्षरूपं व्याख्याधारेण स्वीकुर्वन्-

'उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः।

अपवर्ग तृतीयेति भणतः पाणिनेरपि ॥ [9]

इति प्रतिपादयति। औलूकदर्शनं)वैशेषिकदर्शनम् (स्वीकरणाय-

'ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारुमतं मतं मे।

औलूकमाहु खलु दर्शनं तत् क्षमस्तमस्तत्त्वनिरूपणाय ॥ [10]

एवमेव वेदान्तस्य विषये-

'स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।

इति स्वोच्छिति-मुक्त्युक्ति-वैदग्धी ब्रह्मवादिनाम् ॥ [11]

---

[7] ३/७५
[8] ३/२३
[9] १७/७०
[10] २२/२३
[11] १७/७४

अद्वैतवादस्य विषये-'श्रद्धां दधे निषराड् विमतौ मतानां अद्वैततत्त्व इव सत्यतरेऽपि लोकः। [12] किञ्च सर्वेषां दर्शनानां समाहारे-

'या सोमसिद्धान्तमयाननेव शून्यात्मावादमयोदरेव।

विज्ञानसामस्त्यमयान्तरे, साकारता सिद्धिमयाखिलेव [13]

अत्र सूर्यसिद्धान्तो ज्योतिश्शास्त्रस्य ग्रन्थविशेषः, बौद्धदर्शनस्य शून्यात्मतावादः, विज्ञानवादः, साकारतावादश्च। आधुनिकयुगे वैशेषिकाभिमतञ्च परमाणुवादस्याप्युल्लेखो ग्रन्थेऽस्मिन् विद्यते। एवञ्च वेदेषु सामवेदोऽस्मीति वचनात् सामवेदस्य गायनविषयं प्रस्तौति पद्यमाध्यमेन श्रीहर्षः- 'हा हेति गायन् यदशोचि तेन नाम्नैव हा हा हरिगायनोऽभूत्' । [14] अत्र मल्लिनाथस्य वचनम् - 'गायन् यद्यस्मात् हाहेत्यशोचि, ततस्तेनैव कारणेन नाम्ना हाहा अभूत्, आलापाक्षरानुकारादिति भावः। हाहाहुहुश्चैवमाद्या गन्धर्वास्त्रिदिवौकसामित्यमरः। आलापाक्षरानुकारनिमित्तोऽयमाकारान्तः पुंसि चेति केचित्। हाहा खेदे हूहू हर्षे गन्धर्वेऽमू इति विश्वः'। [15] सर्वेषां विषयाणामेकस्मिन्नैव स्थले प्रयोगात् शिक्षायाः क्षेत्रविस्तारोऽपि दृश्यते तद्यथा -'चतुर्दशाष्टदश चात्र विद्या द्वेधाऽपि सन्तीति शशंस वेधा ।' [16] अत्रष्टादशविद्यानां विषये टीकायां तत्रैव-

'अङ्गानि वेदाश्चत्वारो मींमासा न्यायविस्तरः।

धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दशः।।

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।

अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः ॥ [17]

(तत्रैव उक्तमस्ति। एवमत्र न केवलं सौन्दर्यशास्त्रविषयकानि तत्त्वानि, अपितु सर्वेषां विषयाणां तत्त्वानि प्रतिपाद्य स्वसमये शिक्षायाः पाठ्यक्रमविषये सङ्केतो ग्रन्थकारेण कृतः ।

---

[12] १३/३६
[13] १०/८८
[14] ३/२७
[15] तत्रैव
[16] ३/३५
[17] तत्रैव

शिक्षायां विद्यालयस्य तथैव स्थानम्भवति यथा भवननिर्माणाय भूमेः। प्राचीनकाले शिक्षाया आसन् बहूनि केन्द्राणि यत्र ज्ञानपिपासवः ज्ञानार्जनाय गच्छन्ति स्म तेषु च गुरुकुलानि, मदरसा, विहार इत्यादयः प्रमुखाः। नैषधीये दर्शनस्य तत्रापि बौद्धस्य विशेषः प्रभावो लक्ष्यते, यतोहि तस्मिन् समये विहारेषु शिक्षा दीयते स्म यथोदाहरणेन -'विहारदेशे तमवाप्य मण्डलीमकारयन् भूरितुरङ्गमानपि' । 18 ज्ञायते यत्तदा मण्डल्याकारेणोपविश्य विहारेष्वध्ययनाध्यापनकार्यमभूत्। गुरुशिष्यसम्बन्धोऽपि-

'अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च।

दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥ 19

अत्र मल्लिनाथानुसारम्-'दिनेश्वरस्येव श्रीर्यस्य, अन्यत्र दिने ईश्वरस्येव श्रीर्यस्य तथाभूतान् पटीयान् समर्थतरः अयं देवो राजा अजस्रं सततम् अभ्यासं सान्निध्यम् उपेयुषा प्राप्तवता सहचारिणा इति यावत्, कविना काव्यशास्त्रविदा पण्डितेन शुक्रेण न बुधेन विदुषां धर्मशास्त्रदिदर्शिनेति भावः,सोम्येन च समं सह मुदैव आनन्देनैव न दुःखेनत्येवकारार्थः समयं नयन् अतिवाहयन् दिने दिने प्रतिपादनम् उदयम् अभ्युन्नतिम् आविर्भावञ्च दधौ धारयामास।' 20 अत्र न केवलं गुरुशिष्यपरम्परा, अपि तु तयोरभ्युन्नतिरपि प्रदर्शिता। अत्रैव च गुरोः स्वरूपमपि कथं भवितव्यमित्यपि ज्ञायते। सद्गुरो उपदेशः सुशिष्यस्य बुद्धौ शीघ्रमेवायाति नैव तत्र कालमपक्षते-'गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमार्तिः' 21 शिक्षाया अभ्यासोऽप्यावश्यकः, अभ्यासेन विस्मरणं कदापि नैव जायत इति स्वभावत एव सिद्धः, यथोक्तम्-'अमूस्तमभ्यासभर विवृण्वते निमेषनिःस्वैरधुनापि लोचनैः। 22 अस्याभ्यासस्य प्रतिफलं शुकसारिकादिष्वपि दृश्यते-

तदर्थमध्यापय जनेन तद्वने शुका विमुक्ताः पटवस्तमस्तुवन्।

स्वरामृतेनोपजगुश्च शारिकास्तथैव तत्पौरुषगायनीकृताः ॥ 23

---

[18] १/७१
[19] १/१७
[20] तत्रैव
[21] ३/९१
[22] १/२७
[23] १/१०३

वेदाभ्यासस्य प्रभावो ब्रह्मणि कथं सौन्दर्यमातनोति -'अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा जिह्मब्रह्ममुखौघ-विघ्नितनवस्वर्गक्रियाकेलिना' इत्यनेन पद्यांशेन। किञ्च लिपेः ज्ञानस्य विषये अक्षरविन्यासे वा तस्मिन् समये सम्यक्तया ज्ञानस्य विस्तार आसीदिति ज्ञायते-

कथं विधातर्मयि पणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः।

वियोक्ष्यसे वल्लभयेति निर्गता लिपिर्ललाटन्तपनिष्ठुराक्षरा [24]

अपि च-

लिपिं दृशा भित्तिविभूषणं त्वां नृपः पिवन्नादरनिर्निमेषम्।

चक्षुर्झरैरर्पितमात्मचक्षु रागं स धत्ते रचितं त्वया नु ॥ [25]

एतादृश्याः शिक्षाया वैशिष्ट्यमेव श्रीहर्षेणेत्थमुक्तमस्ति -

अलं सजन् धर्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम्।

तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडः स वक्राम् ॥ [26] सम्प्रति श्रीहर्षस्य नैषधीयचरिते प्रतिपादितानामेतेषां तत्त्वानां मूल्याङ्कनं कुर्मश्चेद् दमयन्त्या वचनानि सत्यमेव -

मद्विप्रलभ्यं पुनराह यस्त्वां तर्कस्स किं तत्फलवाचि मूकः?।

अशक्यशङ्कव्यभिचारहेतुर्वाणी न वेदा यदि सन्ति के तु? ॥[27] प्रतिभाति। एवमेव हंसस्य वचनान्यपि -

त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासव्रतिनां तपोभिः।

त्वामद्य लब्ध्वाऽमृततृप्तिभाजां स्वं देवभूयं चरितार्थमस्तु ॥ [28]

अनेन प्रकारेण नैषधीयचरिते यथा शैक्षिकतत्त्वानां निरूपणमकारि श्रीहर्षस्तत्स्वरूपं यद्याधुनिकसमाजे विशेषतः शिक्षाक्षेत्रे यदि स्वीकुर्मश्चेन्मानवजीवनस्य बहूनां समस्यानां समाधानं नूनमेव भविष्यतीति दिक्।

---

[24] १/३८
[25] ३/१०३
[26] ३/३०
[27] ३/७८
[28] ३/१०१

सन्दर्भग्रन्थाः-


1- संस्कृत साहित्य का समीक्षात्मक इतिहास, कपिलदेव द्विवेदी, विश्वविद्यालय प्रकाशन,2007

2- प्राचीन भारत में लौकिक शिक्षा, सरला कालरा, राष्ट्रिय साहित्य संस्थान, जयपुर, 2015

3- प्राचीनसाहित्य में वर्णित विद्या अध्ययन पद्धति एवं आधुनिक शिक्षा, डा -ओमप्रकाश पारिक, खण्डेलवाल पब्लिशर्स एण्ड डिस्ट्रीब्यूटर्स, जयपुर, 2015

4- वैश्विक परिप्रेक्ष्य में शान्ति और मूल्यशिक्षा, डा-निलाभतिवारी एवं डा-नितिनजैन, भोपाल, 2019

5-संस्कृतवाङ्मय का बृहद् इतिहास) काव्य खण्ड(, पद्मभूषण आचार्यश्रीबलदेवउपाध्याय,राधावल्लभ त्रिपाठी, उत्तरप्रदेश संस्कृतसंस्थान, लखनऊ, 1997

6- नैषधीयचरितम्, श्रीहर्षः, श्रीनारायणः, चौखम्बाविद्याभवन, वाराणसी, 2021

# मम्मट-जगन्नाथयोर्मतेऽर्थान्तरबोधप्रक्रियाविमर्शः

**डा. विनय एच्. वि.**

यद्यपि अभिधा-लक्षणा-व्यञ्जनारूपास्त्रिविधाः शब्दवृत्तयोऽङ्गीकृताः साहित्यशास्त्रे तथापि व्यञ्जनाया एव अधिकः समादरः कवीनां सहृदयानाञ्च प्रपञ्चे दरीदृश्यते काव्यसारस्य चमत्कारस्य निदानं भवतीति हेतोः । किन्तु स व्यञ्जनाव्यापारः कुत्र कथं प्रयुज्यत इत्यस्मिन् विषये आलङ्कारिकाणां मध्ये वैमत्यं वर्तते । तत्र मम्मटाचार्यादीनां मतमन्यत्, रसगङ्गाधरकारस्य मतमन्यदेव । अभिधामूलव्यञ्जनायां प्रयुक्तानां नानार्थकपदानाम् अभिधायां संयोगादिभिः नियन्त्रितायाम् अर्थान्तरं व्यञ्जनया व्यज्यत इति मम्मटादयः । किन्तु पण्डितराजजगन्नाथः नानार्थकपदप्रयोगस्थले अर्थान्तरस्य बोधः व्यञ्जनया भवतीत्येनं सिद्धान्तं सप्रमाणं निरस्य तत्राप्यभिधा एव प्रवर्तत इति स्वसिद्धान्तमुपस्थापितवान् शब्दशक्तिमूलध्वनेर्लक्ष्यस्थलनिरूपणावसरे ।

मम्मटाचार्यः भर्तृहरेः "संयोगो विप्रयोगश्च---" इत्यादिकारिकाम् उपन्यस्य प्रकरणादिभिः एकस्मिन्नर्थे अभिधा नियन्त्र्यते इत्युक्तवान् [1]। द्वितीयार्थेऽपि अभिधेति विचारस्तेन नाङ्गीकृतः। अतः तादृशस्थलेऽपरार्थः व्यञ्जनयेति तदभिप्रायः गृह्यत एव । अपि च तेन नानार्थकशब्दप्रयोगस्थले शाब्दबोधक्रमः विस्तृततया न निरूपितः । किन्तु पण्डितराजजगन्नाथः प्राचीनानां मतमेव द्विधा विभज्य तेषां मते शाब्दबोधक्रममेवं निरूपितवान् ।

तत्र प्रथमं मतं रसगङ्गाधरे जगन्नाथ एवमुपस्थापयति-**"तत्र केचिदाहु:-नानार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वाच्छ्रुतमात्र एव तस्मिन् सकलानामर्थानामुपस्थितौ, शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्देहे च सति, प्रकरणादिकं तात्पर्यनिर्णायकं पर्यालोचयतः पुरुषस्य सति तन्निर्णये, तदात्मकपदज्ञानजाया एकार्थमात्रविषयायाः पुनः पदार्थोपस्थितेरनन्तरमन्वयबोध इति नये द्वितीयायाः पदार्थोपस्थितेः प्राथमिक्या इव न कुतो नानार्थगोचरतेति प्रकरणादिज्ञानस्य तदधीनतात्पर्यनिर्णयस्य वा पदार्थोपस्थितौ प्रतिबन्धकत्वं वाच्यम्, अन्यथा शाब्दबुद्धेरपि नानार्थविषयत्वापत्तिः" [2]** इति ।

अस्मिन् मते पदार्थस्य द्विवारमुपस्थितिर्भवति । अयं क्रमः -

१. यदा कश्चन श्रोता नानार्थकशब्दं श्रुणोति तदा तच्छब्देन सङ्केतिता सर्वेऽप्यर्थास्तस्य बुद्धावुपतिष्ठन्ते । हरिं भजतीत्यस्मिन् प्रयोगे नानार्थकहरिशब्दश्रवणेन श्रोतुर्मनसि झटिति विष्णु-इन्द्र-सिंह-कप्यादयस्सर्वेऽपि हरिपदसङ्केतितार्था उपतिष्ठन्ते ।

२. तदा वक्तुस्तात्पर्यमेतेष्वर्थेषु मध्ये कस्मिन्नर्थे वर्तत इति सन्देहस्तस्य जायते ।

३. अतस्तन्निर्णयार्थं तात्पर्यनिर्णयात्मकं प्रकरणादिकं सः पर्यालोचयति ।

४. तेन पर्यालोचनेन एकस्मिन्नर्थे तात्पर्यं निर्णीयते । पूजारूपप्रकरणवशात् विष्णुरित्यर्थे हरिशब्दप्रयोग इति विष्णुरित्यर्थे तात्पर्यंनिर्णीयते । अतः विष्णुरित्यर्थः तात्पर्यविषयार्थः (प्राकरणिकार्थः) ।

५. तदा पुनः शब्दार्थोपस्थितिर्भवति, पूर्वतनोपस्थितिरिव विष्ण्विन्द्रादिसर्वार्थानां न, परन्तु तात्पर्यविषयार्थस्य विष्णुरित्यर्थस्यैव ।

---

[1] का.प्र.द्वि.उ.

[2] र.गं द्वि.आ.

६. अन्येऽर्थास्तत्र नोपतिष्ठन्ते । यतस्तेषामुपस्थितौ प्रकरणादिज्ञानं तज्जन्यं 'विष्णुरित्यर्थे हरिपदं प्रयुक्त' मिति तात्पर्यनिर्णयो वा प्रतिबन्धको भवति । अस्य प्रतिबद्ध्य-प्रतिबन्धकभावस्यास्वीकारे न केवलं सर्वार्थानामुपस्थितिः परन्तु सर्वार्थानां शाब्दबोधोऽपि भवेत् 'उपस्थितेरप्रतिबन्धे उपस्थितानामर्थानां शाब्दबोधे भान'मिति नियमात् । परन्तु तात्पर्यविषयस्यैवार्थस्य शाब्दबोधो जायते नत्वन्येषामर्थानामित्येवानुभवः। अत एवानुभववैरुद्ध्यं निवारयितुं सः प्रतिबद्ध्य-प्रतिबन्धकभावः स्वीकरणीयः।

७. स एव तात्पर्यविषयीभूतो विष्णुरित्यर्थः प्राकरणिकार्थः । तस्यैव चार्थस्य शाब्दबुद्धिस्तदा भवति ।

८. तर्ह्यनुभवसिद्धस्य अप्राकरणिक-इन्द्राद्यर्थस्य बोधः कथमिति चेन्नानार्थकहरि- पदनिष्ठव्यञ्जनयेत्येव ज्ञेयम् ।

अत एव 'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव' इति, अर्थात् तात्पर्यसन्देहे सति तात्पर्यविषयैकार्थमात्रविषयायाः स्मृतेः कारणानि भवन्ति प्रकरणादीनीत्युक्तम् ।

तात्पर्यनिर्णयात् पूर्वं जायमानायां प्रथमोपस्थितौ सर्वार्थानामुपस्थितिः, तात्पर्यनिर्णयानन्तरं जायमानायां तु तात्पर्यविषयस्यैवार्थस्योपस्थितिः (एकार्थविषया स्मृतिः) जायते, तस्मिन् सन्दर्भेऽप्राकरणिकार्थानामुपस्थितौ प्रकरणादिज्ञानं तज्जन्यतात्पर्यनिर्णयो वा प्रतिबन्धको भवतीत्यस्य मतस्य सारः।

द्वितीयमतमेवमस्ति-**"अपरे त्वाहुः - नानार्थशब्दजशाब्दबुद्धौ तात्पर्यनिर्णयहेतुताया अवश्यकल्प्यत्वात् प्रथमं नानार्थशब्दादनेकार्थोपस्थानेऽपि प्रकरणादिभिस्तात्पर्यनिर्णयहेतुभिरुत्पादिते तस्मिन्, यत्र तात्पर्यनिर्णयस्तस्यैवार्थस्यान्वयबुद्धिर्जायते, नान्यस्येति सरणावाश्रीयमाणायां नैकमात्रगोचरस्मृत्यपेक्षा, नाप्यपरार्थोपस्थानप्रतिबन्धकत्वकल्पनम्" [3]।**

एते तात्पर्यनिर्णय-शाब्दबोधयोः कार्यकारणभावं समर्थयन्ति । पूर्वस्मिन् मते एकमात्रगोचरस्मृतिः प्रकरणादीनां प्रतिबन्धकत्वं च गौरवम् । तद्विनाप्यभीष्टसाधनं भवतीति एतेषां मतम् ।

नानार्थशब्दजशाब्दबुद्धौ तात्पर्यनिर्णयस्य हेतुत्वमवश्यमङ्गीकरणीयमेव । तदा नानार्थकशब्दश्रवण-समनन्तरं यद्यपि सकलसङ्केतितार्थानामुपस्थितिर्भवति तथापि तात्पर्यनिर्णयात्पूर्वं कस्याप्यर्थस्य शाब्दबोधो न जायते । सकलार्थोपस्थित्या तात्पर्यसन्देहे जाते प्रकरणादीनां पर्यालोचनेनैकस्मिन्नर्थे तज्जायते । स एवार्थ-स्तात्पर्यविषयो भवति । तस्यैवार्थस्य शाब्दबोधो जायते, अपरार्थानां न जायत एवेति एकमात्रगोचरस्मृते-र्नावश्यकता । तस्या अनवश्यकत्वेऽ- परार्थोपस्थापनप्रतिबन्धकस्यापि नावश्यकता । यतो हि सर्वार्थानां शाब्दबोधप्रसङ्ग एव एतावावश्यकौ भवतः । अपरार्थबोधस्तु पूर्वमतवत् व्यञ्जनयैव ।

द्वितीयार्थस्य अभिधा-अजन्यत्वे प्राचीनैरुपस्थापितानि कारणानि एवं सन्ति-(१) शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति नियमानुसारम् एकमर्थं बोधयित्वा विरतायामभिधायाम्, अपरार्थबोधनसामर्थ्यं तस्या न भवति । सैन्धवमानयेत्यस्मिन् स्थले अश्वमानय इत्यर्थबोधानन्तरमभिधाया विरतिः । तेन लवणमानयेत्यर्थं बोधयितुमसमर्था सा। (२) अप्राकरणिकार्थाः द्वितीयोपस्थितिकाल उपस्थिता एव न भवन्तीति कारणात् तेषां बोधोऽभिधया न जायते । 'सुरभिमांसं भक्षयती'त्यत्र सुगन्धिमांसं भक्षयतीत्यर्थबोधानन्तरम् अभिधा विरमति । तदा गोमांसं भक्षयतीत्यर्थोऽनुपस्थितोऽर्थः (द्वितीयोपस्थितिकाले)

---

[3] र.गं.द्वि.आ.

। तेन अभिधया न बोधः। (३) प्रयुक्तादन्यशब्दाद्यदि जातस्सोऽर्थः, तर्हि तस्य शब्दस्याभिधया बोधो भवति स्म। परन्तु प्रयुक्तादेव शब्दात् स तात्पर्याविषयोऽर्थोऽपि जायते । गवार्थविषयकबोधोऽन्यशब्दान्न जायते परन्तु प्रयुक्तात् 'सुरभि' शब्दादेव जायते । स शाब्दबोधोऽवश्यं जायत एव । केनापि शब्दव्यापारेण विना कथं तस्य भानम्? अतोऽभिधाया असामर्थ्ये सिद्धे व्यञ्जनां विना अन्यव्यापारात् कथं वा तत्सिद्धिर्भवेत्?

तर्हि तस्यार्थस्य व्यञ्जनाजन्यत्वे कारणानि कानि ? (१) द्वितीयार्थस्योन्मेषस्तु सर्वानुभवसिद्धः। शब्दव्यापारं विना तस्य उन्मेषासम्भवः। उपर्युक्तकारणैः अभिधया तस्य बोधासम्भवः। (२) तत्र लक्षणा न प्रवर्तते मुख्यार्थबाधादिहेत्वभावात् । (३) प्रकरणादीनि अभिधाजन्यबोधमिव व्यञ्जनाजन्यबोधं न प्रतिबध्नन्ति । यतो हि तादृशचमत्कारार्थबोधनायैव व्यञ्जनाऽङ्गीकृता । तत्प्रतिबध्यत्वाङ्गीकारे व्यञ्जनाया वैयर्थ्यं भवेदतः न तस्य प्रतिबध्यत्वम् । (३) व्यञ्जना उत्तेजिका भवति । उत्तेजकं यथा प्रतिबन्धकसत्त्वेऽपि कार्यं जनयति तथैव व्यञ्जनारूपोत्तेजिका प्रकरणादिरूपप्रतिबन्धकसत्त्वेऽपि द्वितीयार्थबोधरूपं कार्यं जनयति । एवं परिवृत्त्यसहत्वात् नानार्थस्थले संलक्ष्यक्रमध्वनिः शब्दशक्तिमूल इति प्राचां सिद्धान्तः । अर्थात् नानार्थकशब्द एव शब्दशक्तिमूलध्वनेर्विषय इति तेषां मतम् ।

प्राचाम् एनं सिद्धान्तं जगन्नाथः निराकरोति । अनयोर्मतयोर्वर्तमानं दोषमेवं प्रतिपादयति सः-

प्रथममते-यदुक्तं द्वितीयवारं जायमाना एकार्थमात्रविषया पदार्थोपस्थितिः शाब्दबोधेऽपेक्षत इति तदसमीचीनम्, तस्या एकार्थमात्रगोचरस्मृतेरनुभवविरुद्धत्वात् । द्वितीयवारं पदार्थोपस्थितौ विवक्षितार्थमात्रस्य स्मृतिर्जायत इत्यत्र न किमपि प्रमाणम् । परन्तु तात्पर्यनिर्णये जाते सत्यपि द्वितीयोपस्थितौ सर्वार्था अपि स्मर्यन्ते इत्येवानुभवः। प्रयुक्तो हरिशब्दः विष्णुरित्यर्थे प्रयुक्त इति यद्यपि प्रकरणादिना ज्ञातं, तथापि द्वितीयोपस्थितौ विष्णुरित्यर्थेन सह सिंहाद्यर्था अपि स्मर्यन्त एव । एतदेव प्रमाणसिद्धं न तु एकार्थविषया स्मृतिः ।

अर्थोपस्थितौ पदज्ञानं कारणमिति तु सर्वे जानन्त्येव । तात्पर्यनिर्णयानन्तरं जायमानायां द्वितीयोपस्थितावपि प्रथमोपस्थिताविव पदज्ञानस्य (अर्थोपस्थापनसामग्र्याः) सत्त्वादप्राकरणि- कार्थोऽप्युपस्थित एव भवति, न त्वनुपस्थितः। एवं सति कथं वा तस्योपस्थितिर्निराक्रियते?

प्रकरणादिज्ञानं तदधीनतात्पर्यनिर्णयो वा द्वितीयार्थोपस्थितौ प्रतिबन्धक इत्येतदप्यनुभवविरुद्धमेव । यतः प्रथमोपस्थितौ जातः सर्वार्थानां स्मरणमूलकः संस्कारः द्वितीयोपस्थितिसमये नष्टो न भवति । तस्य संस्कारस्योद्बोधकत्वेन पदज्ञानमपि तत्रास्त्येव । एवं संस्कारतदुद्बोधकयोः सत्त्वे स्मृतिः केनापि न प्रतिबध्यते । एवमपि द्वितीयोपस्थितावपरार्थोस्थापन- प्रतिबन्धो निरस्यते ।

अपि च 'पयो रमणीय'मित्यस्मिन् प्रयोगे, यज्ञरूपं प्रकरणम्, क्षीरे वक्तुस्तात्पर्यमिति तात्पर्यनिर्णयश्च वर्तते । तदा कश्चनाभिज्ञः तात्पर्यानभिज्ञं प्रति 'नूनमस्य क्षीरे तात्पर्यं न तु जले' इति वक्तुस्तात्पर्यं बोधयति । अर्थात् जलरूपस्तात्पर्याविषयोऽप्यर्थस्तस्य बुद्धावुपस्थित एव । नो चेत् 'न तु जले' इति तात्पर्याविषयं जलार्थं निषेद्धुं स न शक्नुयात् । एतेन प्रमाणितं भवति यत् द्वितीयार्थोपस्थानेऽपि तात्पर्यविषयार्थेन सह तात्पर्याविषयोऽप्यर्थः स्मर्यत इति । अतस्तत्र प्रतिबन्धकत्वं नास्तीति साधितम् ।

द्वितीयमते-प्रकरणादिज्ञानवशात् प्राकरणिकार्थ एव तात्पर्यविषय इति निर्णीतेऽतात्पर्यार्थबोधो व्यञ्जनया जायत इत्युक्तं द्वितीयमते । तत्रायं सन्देहः-नानार्थकस्थले सर्वत्रापि व्यञ्जना भवति उत क्वचिदेवेति ।

यदि सर्वत्र व्यञ्जना भवतीत्युच्यते तर्हि शक्त्या प्राकरणिकार्थः, व्यक्त्या चाप्राकरणिकार्थ इति व्यवस्थापितं भवति। तेन कदाप्यप्राकरणिकार्थस्य प्राकरणिकार्थेन सहोपस्थितिः, तस्य शाब्दबोधेन सहास्य शाब्दबोधो वा नैव भवति। तेन प्राकरणिकार्थस्य शाब्दबोधे तात्पर्यनिर्णयस्य कारणत्वाङ्गीकारो मोघ एव।

'अभिधाजन्यशाब्दबोधं प्रत्येव तात्पर्यज्ञानस्य कारणत्वं कल्प्यते न तु व्यञ्जनाजन्यबोधं प्रति। यतस्तद्बोधे (व्यञ्जनाजन्यबोधे) तत्कारणता (तात्पर्यज्ञानस्य कारणता) नापेक्षते। अतः व्यञ्जनाजन्यबोधस्य अभिधाजन्यत्वं निवारयितुं तात्पर्यज्ञानस्य कारणता कल्प्यते इति तस्या सार्थक्यम्' इत्यपि वक्तुं न शक्यते। यतस्तेन व्यञ्जनायाः सर्वत्रोल्लास्यत्व-क्काचित्कत्वयोः कतरः स्वीकार्य इति सन्देह उदेति।

व्यञ्जनायाः सर्वत्रोल्लास्यत्वाङ्गीकारे प्राकरणिकाप्राकरणिकयोरर्थयोः सर्वत्राभ्युपगमात् तात्पर्यविषयार्थबोध इव तस्यापि शक्त्या बोधाङ्गीकारे न कोऽपि बाधः। यदि, नानार्थशब्दादर्थद्वयोपस्थितौ सत्यां प्रकरणादिना सत्येकस्मिन्नर्थे तात्पर्यनिर्णये तस्यैवार्थस्य प्रथमं शाब्दबुद्धिर्जायते नापरार्थस्येति नियमरक्षणाय नानार्थशब्दजन्याभिधायाः बोधे तात्पर्यनिर्णयः हेतुत्वेन स्वीकार्यः, अन्यथा तु प्राकरणिकतात्पर्यार्थस्येवाप्राकरणिकातात्पर्यार्थस्यापि प्रथमं शाब्दबोधो जायेत, अतः तज्जन्यतावच्छेदककुक्षौ शक्तिजन्यत्वं निवेश्यमित्युच्यते, तर्हि 'सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः' इत्यादौ श्लेषकाव्ये यथाऽर्थद्वयमप्यभिधाविषय एव भवति तथैवात्रापि नानार्थस्थल उभयोरप्यर्थयोरभिधयैव बोधाङ्गीकारे न कोऽपि बाधः। यदि नानार्थस्थलस्य श्लेषस्थलस्य च भेद उच्यते तर्ह्यपि न निस्तारः। पूर्वोक्तरीत्या तात्पर्यज्ञानकारणताया एवासिद्धत्वात् युगपदर्थद्वयबोधानुपपत्तौ तस्य कारणत्ववचनं कथं युज्यते? तस्य कारणत्वसिद्धावेव तादृशवचनस्यौचित्यम्। एवं सति, अतात्पर्यविषयार्थबोधार्थं व्यञ्जनास्वीकारो न युज्यते। एवं 'सर्वत्र व्यञ्जनोल्लास' पक्षो निरस्तः [4]।

व्यञ्जनाया क्काचित्कत्वाङ्गीकारे व्यञ्जनाया क्काचित्कत्वनियामकहेतोरभावः तदङ्गीकारे बाधकः। यदि 'व्यङ्ग्यार्थविषयकं कवितात्पर्यज्ञानं' नियामकहेतुत्वेनाङ्गीकुर्वन्तु इति वदेम, तर्हि द्विधाऽसङ्गतिः-

व्यक्तिजबोधे तात्पर्यज्ञानकारणता पूर्वपक्षिणा नाङ्गीकृता (शक्तिजबोध एव तेन साऽङ्गीकृता) खलु? तर्ह्यत्र स्वेनैव निरस्ता सा व्यञ्जनायाः नियामकहेतुत्वेन कथं स्वीक्रियते तेन?

अश्लीलदोषयुक्ते काव्ये सर्वानुभवसिद्धे द्वितीयार्थे व्यभिचारदूषितत्वम्। यतस्तत्राश्लीलार्थे कवितात्पर्यमेव न भवति। कवितात्पर्यज्ञानं विनापि सोऽर्थस्तत्र बोध्यते। अतस्तात्पर्यज्ञानस्य व्यक्तिजबुद्धिहेतुतायाः कल्पनं न युज्यते।

एवं व्यञ्जनायाः सर्वत्रोल्लास्यत्व-क्काचित्कत्वयोरुभयोरपि निरासे पूर्वोक्तं तात्पर्यज्ञानकारणतासार्थक्यवचनमपि निरस्तमेव।

अग्रे जगन्नाथः अप्रकृतार्थस्यापि अभिधाबोध्यत्वं प्रतिपादयति। यदि अश्लीलार्थव्यञ्जने व्यभिचारं निवारयितुं 'श्रोतुः बुद्धिशक्तिविशेषो व्यक्तेरुल्लासेहेतुः, स च आनन्दरूपफलबलात् चमत्कारिण्येवार्थे व्यक्तिमुल्लासयति न त्वचमत्कारिण्यर्थे' इत्यङ्गीकृत्य व्यञ्जनाया क्काचित्कत्वं यदि साधयामस्तर्हि व्यभिचारो निवर्तेत, किन्तु क्काचित्कत्वस्याङ्गीकारे तन्न कारणं भवति। यतो हि तेन व्यञ्जनाङ्गीकारस्यावश्यकतैव निवर्तते

---

[4] र.गं.द्वि.आ.

एवम्- 'सा बुद्धिशक्तिः व्यञ्जनामुल्लासयतीति किमर्थं वक्तव्यम्? नियन्त्रितामभिधामुल्लासयतीत्येवोच्यताम् । तथा उल्लसितयाऽभिधाशक्त्यैव द्वितीयार्थबोधो जायते । व्यञ्जनोल्लाससमर्थायाः श्रोतृबुद्धिशक्तेः, नियन्त्रितायाऽभिधाया उल्लासेऽपि सामर्थ्यं वर्तत एव खलु?, येन व्यञ्जनारूपातिरिक्तवृत्तेरङ्गीकाराज्जायमानं गौरवं न स्यात् ।

नानार्थव्यञ्जकस्थलेऽग्रहीतद्वितीयार्थशक्तिकस्य ग्रहीतविस्मृतद्वितीयार्थशक्तिकस्य च सर्वप्रकारेणैवाप्राकरणिकार्थबोधानुदयान्नानार्थस्थले व्यञ्जनयाऽप्राकरणिकार्थबोधवादिनो मते व्यञ्जनया तदर्थबोधो दुर्वारैव । 'सुरभिमांसं भक्षयती'- त्यत्र 'सुरभि' पदस्य गव्यपि शक्तिर्वर्तत इति यस्य ज्ञानं नास्ति (अग्रहीतशक्तिकः), अथवा पूर्वं जानन्नपीदानीं विस्मृतवान् (ग्रहीतविस्मृतद्वितीयार्थशक्तिकः) तस्य कृते गवार्थे कथञ्चिदपि, अर्थात् न केवलमभिधया किन्तु व्यञ्जनयापि बोधो न जायते । द्वितीयार्थबोधे व्यञ्जनाङ्गीकर्तृणां मते तादृशानामपि व्यङ्ग्यार्थबोधोऽनिवार्यतया भवेत् । तत्तु न सम्भवत्येव । परन्तु येऽप्राकरणिकार्थ-बोधेऽप्यभिधामेवाङ्गीकुर्वन्ति तेषां मते स दोषो नास्तीति तन्मतमेवाङ्गीकर्तुमुचितम् ।

'येन शब्देन योऽर्थो व्यज्यते तस्य शब्दस्य तदर्थगतशक्तिज्ञानं तदर्थव्यक्तेरुल्लासे हेतु' रिति कार्यकारणभावस्वीकारेऽगृहीतशक्तेः ग्रहीतविस्मृतशक्तेर्वा पुरुषस्य न व्यञ्जनोल्लास इत्युच्यते चेत्, सुरभिमांसमित्यादौ स्थले लक्षणं समन्वेति । येन=सुरभिशब्देन योऽर्थो=गवार्थो व्यज्यते तस्य=सुरभिशब्दस्य तदर्थगत=गवार्थगतशक्तिज्ञानं तदर्थव्यक्तेः=गवार्थव्यक्तेः (व्यञ्जनायाः) उल्लासे हेतुरितिरीत्या । किन्तु 'निःशेषच्युतचन्दनमि'त्यादौ व्यज्यमाने रमणार्थे तल्लक्षणं न समन्वेति रमणार्थेऽधमशब्दस्य शक्तिज्ञानं कस्यापि नास्तीति हेतोः। यद्यधमपदस्य रमणार्थे शक्तिरस्ति तर्हि तस्याप्यर्थस्याभिधयैव बोधसम्भवात् पुनर्व्यञ्जनाया नैरर्थक्यापत्तिः ।

यदि नानार्थव्यञ्जनस्थल एव एवंजातीयकः कार्यकारणभावः कल्प्यते, तत्र शक्तेर्नियन्त्रितत्वेन अकिञ्चित्करत्वात्तस्याः व्यक्तिकल्पनं युज्यत एव इत्युच्यते तर्हि नवीनकार्यकारणभावकल्पनमूलकगौरवप्रसङ्गः । अपि च नियन्त्रणस्य पूर्वमेव दूषितत्वेन 'तद्धेतोरेव तदस्तु किं तत्कल्पनये'ति न्यायात् व्यक्त्युल्लासहेतोस्तदर्थगतशक्तिज्ञानस्यैव तदर्थबोधजनकत्वमस्तु किं व्यक्त्युल्लासस्य जनकत्वकल्पनेन? इति वक्तुं शक्यत्वात् न व्यञ्जनावश्यकता ।

'अप्राकरणिकोऽप्यर्थोऽभिधाजन्य इति यदि वदन्ति भवन्तस्तर्हि भवतु, परन्तु सर्वत्र न । कुत्र तर्हि? यत्र द्वितीयार्थो न बाधितस्तत्रैव । "जैमिनीयमलं धत्ते रसनायामयं द्विज इत्यत्र 'जैमिनीयं विष्ठाम् अयं द्विजः रसनायां धत्ते' इति द्वितीयार्थः (जुगुप्सितार्थः) बाधितः, ब्राह्मणस्य तादृशाचरणाभावात् । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयज्ञानं प्रतिबन्धकमिति न्यायात्, विप्राः तादृशाचरणं न कुर्वन्तीत्याकारकोऽभावनिश्चयः विष्ठां जिह्वायां धारयतीत्येतस्य प्रतिबन्धकः। व्यक्तेस्तु बाधितार्थबोधकत्वं धर्मिग्राहकमानसिद्धमिति व्यक्तिवादिनामदोष' इति यद्युच्यते तदप्यसमीचीनम् । 'गामवतीर्णा -- ' इत्यादिषु वाच्यार्थ एव बाधितः । तत्र वाच्यार्थस्यान्वयार्थं यो यत्नोऽनुस्रियते तेनैव यत्नेन नानार्थस्थलेऽपि बाधितार्थबोधस्योपपत्तिः स्यात् । तथा यदि नाङ्गीक्रियते तर्हि चमत्कारोत्पादनार्थं काव्येषु प्रयुज्यमानेषु सर्वेष्वप्यलङ्कारेषु वाच्यार्थस्य प्रायः बाधितत्वात् तत्र सर्वत्रापि व्यञ्जनाऽङ्गीकरणीया भवेत् ।

एवं रीत्या द्वितीयार्थबोधार्थमभिधैवाश्रयणीया न पुनर्व्यञ्जना । एतस्य सिद्धान्तस्य समर्थनार्थं तेन व्यञ्जनायाः स्थलमपि स्पष्टरूपेण प्रमाणितरूपेण च दर्शितं वर्तते । तदेवम्-

यदि नानार्थस्थले व्यञ्जनाऽस्त्येवेत्युच्यते प्राचीनैस्तर्हि तादृशस्थलेषु वर्तमानयोः प्राकरणिकाप्राकरणिकार्थयोर्मध्ये वर्तमानायामुपमायां सा कदाचिद्भवेत्, न तु सा सार्वत्रिकी' इत्युक्तम् । यतो ह्यर्थद्वयस्य परस्परमसम्बद्धतानिवारणार्थं कल्प्यमानोपमा व्यङ्ग्यैव भवतीति न, परन्त्वर्थापत्त्यापि ज्ञायेत । अतः न व्यञ्जनाया अनिवार्यता ।

शब्दशक्तिमूलध्वनेः लक्ष्यस्थलं भवति योगरूढिपदप्रयोगस्थलम् । योगरूढिस्थले रूढिर्योगापहारिणीति न्यायादभिधया रूढ्यर्थे बोधिते रूढ्यर्थासंवलितस्यार्थान्तरस्य योगार्थस्य व्यक्तिं विना प्रतीतिर्दुरुपपादा । अत योगरूढिस्थलमेव शब्दशक्तिमूलध्वनेर्लक्ष्यस्थलम् ।

एवम् अर्थान्तरबोधप्रक्रिया प्राचीननवीनालङ्कारिकयोर्मते भिन्नैव इति शम् ।

# क्त्वाप्रत्ययस्थले भिन्नकर्तृकत्वभ्रमः

डा. दिनेशचन्द्रपाण्डेय

ध्वनितत्त्वविरोधवादिषु व्यक्तिविवेककारस्य महिमभट्टस्य विशिष्टं स्थानमस्ति । यतः सः साक्षात् विरोधं न प्रस्तौति, अपि तु स्वोक्तेः उपस्कारकत्वेन शास्त्रान्तराणां विचारान् बहुधा प्रस्तौति । तेषु क्त्वाप्रत्ययस्थले भिन्नकर्तृकत्वभ्रमः इत्ययं विषयोऽन्यतमः ।

तत्र सः एतद्विषयसम्बद्धतया पञ्चविधं प्रस्तौति ।

**कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा ।**
**क्त्वो भिन्नकर्तृकत्वभ्रमाय भवति क्रियावचश्च तयोः ।**
**पौर्वापर्यं क्रियाणां यद् वास्तवं तदपेक्षिणि ।**
**क्त्वः पौर्वकाल्ये किं तासां प्राधान्येतरचिन्तया ॥**

इति । तदिदानीं मया विव्रीयते ।

**१. बह्वीषु च तासु उत्तरोत्तरक्रियापेक्षं पूर्वपूर्वक्रियापौर्वकाल्यम् । यथा स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ । अत्र च विपचन-घटन-भवनरूपाः बह्व्यः क्रियाः इत्यत्रापि घटनापेक्षं विपचनस्य तद्भवितुमर्हत्येव, उभयत्रापि कर्तृप्रत्ययनिर्देशाविशेषात् । केवलं कृद्वाच्यतया कर्तुरुपाधिभावं गमितेति भिन्नकर्तृकत्वभ्रमः । यथा-**

**शिशिरकालमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।**
**इति धियास्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः ॥**

**इत्यत्र कुचोष्मणः कर्तुर्हरणक्रिया । अत एव केचिदपास्येत्ययं ल्यबन्तप्रतिरूपको निपात इति व्याख्यातवन्तः ।**

बह्वीषु क्रियासु सतीषु द्वितीयक्रियापेक्षं प्रथमा क्रिया, तृतीयापेक्षं द्वितीया, चतुर्थापेक्षं तृतीया इत्यादिरीत्या पूर्वपूर्वक्रियापौर्वकाल्यम् । यथा स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ भोजनक्रियापेक्षं स्नानक्रियायाः, पानक्रियापेक्षं भोजनक्रियायाः, व्रजनक्रियापेक्षं पानक्रियायाः पौर्वकाल्यम् । अत्र प्रयुज्यमानक्रियामादाय पूर्वकालिकत्वाङ्गीकारे विपच्य घटो भवतीत्यत्र विपचन-घटन-भवनरूपाः बह्व्यः क्रियाः इत्यत्रापि घटनापेक्षं विपचनस्य तद्भवितुमर्हत्येव, 'घट' इत्यत्र 'भवति' इत्यत्र च समानरूपेण कर्तृप्रत्यय एव निर्दिष्टः (घट इत्यत्र अच्, भवति इत्यत्र तिप् । प्रत्ययद्वयमपि कर्तृर्थ एव प्रयुक्तम्, अतः न कश्चन भेदः) । विशेषस्तु अयमेव यत् कृत्प्रत्ययेन वाच्य इति कारणात् कर्तुः विशेषणभावं गमिता घटनक्रिया इति भवनक्रियायाः कर्ता अन्यः, घटनक्रियायाश्चान्य इति भ्रमः जातः ।

यथा- शीतकालात्यये सति शीतं दूरीकर्तुं समर्थस्य अस्माकं कुचयोरुष्णस्य प्रयोजनं वा किं वर्तते? इत्येवं विचिन्त्य पूर्वं प्रियेषु कुपिताः प्रियाः दूरीकृतरोषाः, तस्मादेव हेतोः नमस्कुर्वतः प्रियतमान् गाढं आलिङ्गितवत्यः ।

अत्र कुचयोरूष्मा एवात्र कर्ता, तस्य 'शीतहरः कुचोष्मा' इत्यत्र हरणक्रिया ऊष्मणः उपाधि(विशेषण)भावं प्रापिता । हरणक्रियायाः उपाधिभावप्राप्तेः व्याख्यानकाराः 'अपास्य'शब्दगतः क्त्वाप्रत्ययः कां क्रियामुद्दिश्य इति अजानन्तः प्राप्तल्यबन्तरूपः निपात इति व्याख्यातवन्तः ।

समानकर्तृकयोः पूर्वकाले इत्यस्मिन् सूत्रे द्विवचनसत्त्वात्, यत्र बह्व्यः क्रियाः भवन्ति तत्र कथमन्वेतीदं सूत्रमिति न चिन्तनीयम् । तत्र द्विवचनमविवक्षितम् (केवलं क्रियाद्वयमेव तत्र नापेक्षितं, किन्तु अनेकक्रिया इत्येव) । अतस्तत्रापीदमेव सूत्रमन्वेति । एकस्मिन् वाक्ये अनेकाः क्रियाः यदि निर्दिश्यन्ते तदा क्रमात् द्वितीयं प्रति प्रथमस्य, तृतीयं प्रति द्वितीयस्य चतुर्थं प्रति तृतीयस्य-इत्येवंरीत्या क्रियायाः पौर्वकाल्यं सम्भवति । अत्र तु अत्यन्तं स्पष्टतयैव अवगमनं भवति कमपि भ्रमं विना । किन्तु 'विपच्य घटो भवति' इत्यत्र स्पष्टा क्रिया भवनक्रिया, घटनक्रिया तावन्न स्पष्टतया वर्तते भवनक्रियायाः विशेषणभावप्राप्तेः अप्राधान्याच्च तेन घटनक्रियाया निमग्नत्वात् तदपेक्षं विपाकक्रियायाः पौर्वकाल्ये भ्रमः जायते । सूक्ष्ममतय एव 'घटशब्दान्तर्गतघटनक्रियापेक्षं पौर्वकाल्यं विपच्-धातुनोक्ते पाके वर्तत' इति अवगच्छन्ति । अस्पष्टतायाः कारणं तु घटनक्रिया कर्तु-रुपाधिभावं प्राप्तेत्येव ।

एवं यत्र एककर्तृका बह्व्यः क्रिया भवन्ति, तत्र च एका क्रिया प्रधाना, अन्याश्च उपाधिभावप्राप्त्यादिकारणतया अप्रधानाश्च भवन्ति । तदा तासु क्रियासु एककर्तृकत्वं न झटिति ज्ञायते, भिन्नकर्तृकत्वभ्रमः भवति । विपच्य घटो भवतीति तादृशस्यैकमुदाहरणम् । अन्यदप्युदाहरणं दत्तं ग्रन्थकृता 'शिशिरकालमपास्य---' इत्यादिना । अस्मिन्नुदाहरणे कुचोष्मा कर्ता, तस्य क्रिया शीतहररूपा, सा तु कर्तुः उपाधिभावं प्रापिता, 'शीतहरस्य कुचोष्मण' इति । अतः 'अपास्य' इत्यत्र वर्तमानः क्त्वाप्रत्ययः कां क्रियामुद्दिश्य वर्तत इति संशय उदेति । असु-क्षेपणेधातोः क्त्वा-प्रत्यये असित्वा, इति च रूपम् । 'अप'उपसर्गयोगे अपास्य इति रूपम् । तत्र वर्तमानः क्त्वाप्रत्ययः हरणक्रियापेक्ष इति न ज्ञायतेऽत एव भ्रमः जायत इति तात्पर्यम् ।

**२. निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।**
**असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥**

**इत्यत्र निरीक्षणक्रियाकर्तुर्मृत्योर्भयपक्षपतनक्रिये विषय-विषयिभावभङ्ग्योपात्ते ।**

यः स्वप्रतापेन शत्रूणां धैर्यं निरस्तं कृतवान्, यः परशुराममाराधितवान् तं कर्णं दृष्ट्वा मृत्योरपि अपरिचितेषु भयेषु सोढुमशक्यः पक्षपातः जायेत ।

इत्यत्र निरीक्षणक्रियायाः कर्तुः मृत्योः भयक्रिया पक्षपतनक्रिया च विषय-विषयिभावभङ्ग्योपात्ते । भयं विषयः, पक्षपतनं विषयीतिरूपेणोपात्ते, क्रियारूपेण नोपात्ते ।

निरीक्षणं क्रिया । तत्र क्त्वा (ल्यप्) प्रत्ययः । तत्कर्ता मृत्युः । इयमेकैव क्रियात्र उपात्ता । अतः क्त्वाप्रयोगस्याधारभूता अनेकाः क्रिया अत्र न सन्तीति कथं पौर्वकाल्यं निरीक्षणधातोः इति सन्देह उदेति । महिमभट्टः तस्य समाधानमेवं वदति यत्, भयेषु इत्यत्र बिभेतीति क्रिया, पक्षपात इत्यत्र पक्षे पततीति पतनक्रिया च सूचिता । एतासां तिसृणामपि क्रियाणां कर्ता मृत्युरेव । तत्र पौर्वकाल्यं निरीक्षणक्रियायाः ।

पक्षपतनक्रियायां विषयः भयम्, भये मृत्योः पक्षपात इति पक्षपातो विषयी ।

जायेत इति शुद्धा (स्पष्टा) क्रिया । सैव यद्यत्र परिगण्यते तर्हि, निरीक्षण-क्रियायाः कर्ता मृत्युः, जनिक्रियायाः कर्ता पक्षपात इति रीत्या निरीक्ष्य इत्यत्र क्त्वाप्रयोगोऽसाधुर्भवतीति वक्तव्यमापतति । किन्तु तस्य साधुत्वमेवं भवतीति महिमभट्टेन दर्शितमस्ति ।

**३. 'यां दृष्ट्वापि समुत्सुके मनसि मे नान्या करोत्यास्पदम्' इत्यत्र दर्शनक्रियाकर्तुर्मनसोऽन्यकर्तृकास्पदक्रियानधिकरणभावेनोपात्तस्यौत्सुक्यक्रियावेशेषणभावेनोपात्ता ।**

'सुन्दर्याः दर्शनमात्रेणापि उत्कण्ठायुक्ते मम चित्ते अन्या काऽपि स्त्री स्थानं न प्राप्नोति' इत्यत्र दर्शनं क्रिया, तत्कर्ता मनः, तस्य । आस्पदं क्रिया, तत्कर्ता अन्या स्त्री, तस्याः आस्पदक्रियायाः अनधिकरणभावेन उपात्तस्य अर्थात् मनः अधिकरणं न भवतीति रीत्या वाक्ये उपात्तं मनः, तस्य औत्सुक्यक्रिया=औत्सुक्यरूपा क्रिया विशेषणभावेनोपात्ता ।

एकां सुन्दरीं दृष्ट्वा मनः उत्सुकम्, तस्मिन् मनसि अन्या आस्पदं न प्राप्नोति । अत्र दर्शनक्रियाकर्ता मनः, अन्यस्त्रीकर्तृकास्पदरूपक्रियाया अधिकरणं न भवति इति आस्पदक्रियानधिकरणत्वेनोपात्तं मनः, तस्य विशेषणरूपेण औत्सुक्यक्रिया उपात्ता । एवं समुत्सुकीभवनस्य उपाधिरूपेणोपादान एवात्र अन्यकर्तृकभ्रमहेतुः । समुत्सुकक्रियापेक्षं दर्शनक्रियायाः पौर्वकाल्यमिति ज्ञाते सर्वं समीचीनम् ।

**४. क्वचित् कर्तुः सम्बन्धितामुपगताऽसौ भ्रमहेतुः । यथा 'स्मर संस्मृत्य न शान्तिरस्ति मे' इति ।**

कुत्रचित्स्थले क्त्वान्त-ल्यबन्तक्रियामुक्त्वा द्वितीयक्रिया यदि क्रियापदत्वेन नोच्यते, प्रत्युत कर्तृसम्बन्धितया नामपदेनैवोच्यते तदाऽपि, भिन्नकर्तृकत्वभ्रमः भवति । 'स्मर=हे ! मन्मथ, संस्मृत्य=तत्सर्वमपि स्मृत्वा न शान्तिरस्ति मे=मम मनः शान्तिं नानुभवति' इति ।

कालिदासविरचितकुमारसम्भवस्य चतुर्थसर्गस्थमिदं पद्यम् । अत्र शान्तिरित्यनेन पदेन शमनरूपक्रिया विवक्षिता । किन्तु संस्मृत्य इति ल्यप्-रूपेण प्रथम-क्रियामुक्त्वा 'शमन'रूपां क्रियां 'शाम्यामि' इतिक्रियापदरूपेण अनुक्त्वा 'मे' इति षष्ठ्या कर्तुः सम्बन्धितया, 'शान्तिः' इति नामपदरूपेण प्रयुक्तवन्त इति भिन्नकर्तृकत्वभ्रमहेतुः ।

**४. केचित् पुनः कर्तृ-क्रिययोरनुपादानमपि हेतुमिच्छन्ति । तत्र कर्तुर्यथा-**

**ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम् ।**
**सर्वगुणविरहितस्य हरेः परिपूजया कुरु नरेन्द्र ! को गुणः ॥**

**अत्र हि समवेक्षा-पूजयोरेको लोकः कर्ता । स च सामर्थ्यसिद्ध इति नोपात्तः । पूजा चोपात्ताऽपि कृद्वाच्यतया कर्मोपसर्जनीभूतेत्युभयं भ्रमहेतुः ।**

केचित् पुनः कर्तृ-क्रिययोरनुपादानमपि=कर्तुः क्रियाया वा शब्दतोऽनुक्ति-मपि हेतुमिच्छन्ति=भिन्नकर्तृकभ्रमहेतुरित्यभिप्रयन्ति। तत्र कर्तुर्यथा=कर्तुरनुपादान-स्योदाहरणम्-

कुरुनरेन्द्र ! =कुरुराज! ननु कमपि गुणम् समवेक्ष्य=यस्मै गौरवं देयमस्ति तस्मिन् कमपि सद्गुणं दृष्ट्वैव गौरवं ददतीति, कस्यापि गुणस्याधारेणैव सर्व एव=सर्वेऽपि जनाः पूज्यताम् एति=पूज्यताभाग्भवन्ति। किन्तु सर्वगुणविरहितस्य =यस्मिन्नेकोऽपि गुणो नास्ति, परमार्थत एव निर्गुणो वर्तते तादृशस्य हरेः= कृष्णस्य परिपूजया=सर्वतोभावेन सपर्यया को गुणः=किं प्रयोजनम् ॥

अत्र हि समवेक्षा-पूजयोरेको लोकः कर्ता=गौरवास्पदेषु गुणम् ईक्षते लोकः, गुणं दृष्ट्वा च पूजयति इति समवेक्षा-पूजनरूपक्रियाद्वयस्यापि एक एव 'लोकः(गुणद्रष्ट्री व्यक्तिः) कर्ता। स च=कर्ता सामर्थ्यसिद्धः=अर्थसामर्थ्यात् सिद्ध इति नोपात्तः=शब्दतो नोक्तः । पूजा चोपात्ताऽपि=पूज्यतामेतीत्यत्र पूजनक्रिया यद्यप्यु-पात्ता तथापि कृद्वाच्यतया=कृत्प्रत्ययेन वाच्या इति, कर्मोपसर्जनीभूता=कर्मणः ('सर्व'शब्दोक्तगुणवद्व्यक्तिः अत्र कर्म, तस्य) कृते गौणा च इत्युभयं=कृद्वाच्यत्वम्, उपसर्जनीभूतत्वं चेत्युभयं, भ्रमहेतुः=भिन्नकर्तृकत्वभ्रमस्य हेतुः ।

'गुणं समवेक्ष्य लोकः पूजयती'ति यद्विवक्षितमत्र तत्तथैव प्रयुज्यते चेत् न सन्देहास्पदत्वं वर्तते अर्थात् पूजनक्रियापेक्षः ईक्षणक्रियागतः क्त्वा प्रत्यय इति स्पष्टं ज्ञायते । किन्तु पद्यस्थे प्रयोगे गुणं समवेक्ष्य इत्यत्र ईक्षणक्रियायाः कर्ता लोक इति ज्ञायते, किन्तु पूज्यतामेति इत्यत्र पूजनक्रियायाः कर्तृत्वं लोकस्यैवेति न स्पष्टतया ज्ञायते । तेन क्त्वाप्रत्ययः कां क्रियामुद्दिश्य इति अस्पष्टं भवति ।

यद्यपि एतादृशप्रयोगेषु व्याकरणरीत्या दोषो नास्ति, तथापि एतादृश-प्रयोगेण अर्थविषयकभ्रान्तिः संशयो वा वाचकानां मनसि उत्पद्येत । तेन अवि-लम्बेन अर्थस्फुरणया जायमान रसास्वादः प्रतिबध्यते । अतः यथाशक्ति एतादृशप्रयोगाः न करणीयाः इत्येव महिमभट्टस्याशयः ।

**५. क्रियाया यथा-**

**अकृत्वा परसन्तापमगत्वा खलनम्रताम् ।**
**अनुत्सृज्य सतां मार्गं यत् स्वल्पमपि तद्बहु ॥**

**अत्र हि प्रकरणादिगम्याया लाभक्रियाया अनुपादानं करणादीनां भिन्नकर्तृकत्वभ्रमहेतुः ।**

क्रियाया यथा=क्रियाया अनुपादानेन जायमानस्य भिन्नकर्तृकत्वभ्रमस्योदाहरणम्-

परसन्तापम् अकृत्वा=परेषां कृते दुःखम् अदत्त्वा खलनम्रताम् अगत्वा =दुर्जनेषु शरणागतिमकृत्वा सतां मार्गम् अनुत्सृज्य=सज्जनानां मार्गमेव सदाऽपि अनुसृत्य यत् स्वल्पमपि=सम्पादितं स्वल्पमपि तद्बहु=तत् बहु एव, नाल्पम् । यतो हि एतादृशमार्गे लौकिकं किमपि बहु प्राप्तुं न शक्यते ।

अत्र हि प्रकरणादिगम्याया लाभक्रियाया='यत् स्वल्पमपि लभ्यते तद्बहु' इति विवक्षितत्वात् लाभक्रिया एवात्र विवक्षितक्रिया । किन्तु सा प्रकरणेनैवाव-गम्यत इति नोक्ता, तस्याः क्रियायाः, अनुपादानं=शब्दतोऽनुक्तिः करणादीनां= करण-गमन-उत्सृजनक्रियाणां भिन्नकर्तृकत्वभ्रमहेतुः=ताः क्रियाः भिन्नकर्तृका इति भ्रमस्य कारणम् ।

अर्थसामर्थ्यात् प्रकरणवशाद्वा या क्रियाऽवगम्यते तच्छब्दतो नोच्यते कविभिः । तादृशसन्दर्भे क्त्वाप्रत्ययान्तधातुनाऽभिधीयमानायाः क्रियायाः पूर्व-कालत्वं कां क्रियामुद्दिश्येति, द्वेऽपि क्रिये भिन्नकर्तृके इति च भ्रान्तिरुदेति । 'यत्स्व-ल्पमपि तद्बहु' इत्यत्र यत् स्वल्पं सः लभते तद् बहु इति लाभक्रिया विवक्षिता । तस्य प्रकरणगम्यत्वात् लाभक्रिया पदेन नोक्ता। वाचका यदि तां क्रियां न प्रकरणा-दवगच्छन्ति तर्हि अवश्यमेव परसन्तापाकरणक्रियायाः बहु भवतीत्यत्र वर्त-मानायाः लाभक्रियायाश्च कर्ता भिन्न इति भ्रमो भवति । अतस्तस्याः क्रियाया अव-गमन एव 'यः परसन्तापं न करोति, यः खलनम्रतां न गच्छति, यश्च सतां मार्गं नोत्सृजति तेन लब्धं स्वल्पं चेदपि तत् बहु एव, अतः सः बहु एव लभते' इति सर्वासामपि क्रियाणामेककर्तृकत्वम् विज्ञातं भवति ।

**एवम्** कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा 'क्त्वा' प्रत्ययार्थरूपक्रियाया भिन्नकर्तृकत्वभ्रमाय भवति अवचश्च कर्तृ-क्रिययोः शब्दतोऽनुपादानम् च अपि भिन्नकर्तृकत्वभ्रमं जनयति। शब्दतः ज्ञायमानानाम् अर्थतोऽवगम्यमानानां वा क्रियाणां, यद् वास्तवं, न तु अवास्तवं मिथ्याभूतं पौर्वापर्यं, तदपेक्षिणि क्त्वाप्रत्ययस्य पौर्वकाल्यं तदपेक्ष्य भवति । तथा सति, तासां क्रियाणां, प्राधान्याप्राधान्यविचारेण किं प्रयोजनम् ? अतस्तादृशचर्चया अलम् इति भिन्नकर्तृकत्वभ्रमः कुत्र जायत इति सविमर्शं सोदाहरणं च विवेचयति महिमभट्टः । इति शम् ।

# व्याकरणे विवृतप्रयत्नविमर्शः

डा. मनीष शर्मा
केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः
सहायक प्राध्यापक व्याकरणविभागः
मो. 08922041232

सारांशः

व्याकरणशास्त्रं शब्दानुशासनमित्यपि सर्वत्र व्यह्रियते तथा शब्दानुशासनेन वर्णानामनुशासनमिति फलितार्थेन सम्बन्धः क्रियते । अनुशासनपदेन साधुत्वार्थमपि प्रतिभाति यतः व्यवहारे बालकं प्रति अनुशासनं तेन बालकेभ्यः साधुत्वं समागच्छेत् इति अभिप्रायः तद्वदेव अत्रापि शब्दानां साधुत्वं यथा स्यात् , एतदर्थमस्ति अनुशासनं येन अनुशासनेन शब्दसाधुत्वं स्पष्टतया बुद्धीभवति वर्णानां साधुत्वस्वीकारे सति प्रक्रियानिर्वाहः व्याकरणे आपतति तच्च प्रक्रियायां कथं वर्णव्यवहारः मुखे स्यात् यच्च उच्चारणेन प्रयोगः भवेत् अथवा तस्य साधुत्वं वा स्यात् वर्णज्ञानेन शब्दानां परिपाकः भवति इति अभिप्रायः कथितश्च भर्तृहरिणा वाक्यपदीये

**न वर्णव्यतिरेकेण पदमन्यच्च विद्यते ।**
**वाक्यं वर्णपदाभ्यां च व्यक्तिरिक्तं न किञ्चन् ।।**1

तथैव व्याकरणशास्त्रे शब्दसाधुत्वप्रतिपादनात् प्राक् प्रक्रिया भवति तत्र वर्णज्ञानेन वर्णशाब्दबोधः स्थानप्रयत्नाभ्यां सुस्पष्टतया सम्पद्यते, तदनन्तरमेव स्वरविषये बोधः समायाति यतो हि स्वरं वर्णं विना स्वरस्य कल्पना अपि कर्तुं नैव शक्यते तथा च स्वरं शाब्दबोधः भवितुं नार्हति यजुर्वेदे तु सर्वत्र स्वरमेव ज्ञात्वा वेदार्थबोधः सम्भवति अतः स्वराणां प्राथ्यमेन उपस्थितिश्च बहुत्र दरीदृश्यते तथा च तेषु स्वरेषु विवृतस्वरस्य वैशिष्टयमपि वर्तते कथमिति चेत् स्वराणां राजा विवृतस्वर एव इति ।

स्वरविषये वैयाकरणसिद्धान्तकौमुद्यां प्रयत्नविषये **आद्यश्चतुर्धा**2 इति दीक्षितेन कथितम्। लघुकौमुद्यां वरदराजार्येण पञ्चधा स्वीकृतं तर्हि अनयोः भेदः कः आभ्यन्तरप्रयत्नविषये इति जिज्ञासायां वस्तुतः ईषद्विवृतप्रयत्नं दीक्षितेन नाङ्गीकृतं यतः **नाज्झलौ**3 सूत्रस्य सत्वात् अच् हल् अनयोः सवर्णसञ्ज्ञा न भवति । वरदाचार्येण स्वीकृतं चेत् ईषद्विवृतप्रयत्नेन लघुकौमुद्यां नाज्झलौ सूत्रं नोपात्तं वर्तते एतस्मादेव । विवृतप्रयत्नस्तु स्वराणामेव भवति तर्हि विवृतप्रयत्नविषयेऽपि मनसि कदाचित् भ्रमो वा स्यात् । पाणिनिना सूत्रं व्यरचि **अ अ**4 अष्टाध्यायां वर्तते अन्तिमं सूत्रं लुप्तषष्ठ्यन्तं स्वीक्रियते। प्रथमोऽकारः विवृतप्रयत्नः द्वितीयविधीयमानः अकारः संवृतप्रयत्नः वर्तते । सूत्रार्थस्तु विवृतप्रयत्नमुच्चार्य संवृतप्रयत्नं सूत्रेण विधीयते यतः अन्तिमं सूत्रं अष्टाध्यायीग्रन्थस्य तर्हि **पूर्वत्रासिद्धम्**5 सूत्रेण विधीयमानस्य संवृतप्रयत्नस्य सम्पूर्णामिष्टाध्यायीं प्रति असिद्धत्वात् पुनः विवृतप्रयत्नमेव संतिष्ठते । अनेन ज्ञायते प्रक्रियायां सर्वत्र विवृतप्रयत्नस्यैव उपस्थितिः तस्मादेव प्रक्रियायां तु विवृतमेव सर्वत्र व्यवहारः कौमुद्यां महाभाष्यकारेणाऽपि अकारस्य विवृतोपदेशः कर्तव्यः इति प्रोक्तम्। व्याकरणे अस्मिन् विषये महती चर्चा दरीदृश्यते । अकारस्य विवृतोपदेशेन दीर्घाकारस्य ग्रहणं यथा भवेदिति एतदर्थमेव उपदेशः कर्तव्यः अइउण् सूत्रस्थाकारस्य विवृतोपदेशः कर्तव्यः इति प्रतिज्ञा तत्रापि विशेषतः सर्ववर्णान् सम्यक् विचार्य विशेषेण अत्र अकारस्य कर्तव्य इति विवृतोपदेशः तेन आकाराणां ग्रहणं यथा स्यात् । अकारस्य संवृतप्रयत्नत्वात् तथा दीर्घप्लुतयोः विवृतप्रयत्नस्य सत्वाच्च प्रयत्नभेदात् सवर्णसञ्ज्ञा बाधः चेत् विवृतोदेशः कर्तव्यः अकारस्य इत्यभिप्रायः यद्यपि सवर्णग्राहकता तु अणुदित्सवर्णस्य चाप्रत्ययः इत्यस्मिन् सूत्रे विद्यते तथापि सजातीयत्वं स्यात् तदर्थमेव **अकारस्य विवृतोदेश आकारग्रहणार्थः**6 भाष्यकारेण प्रोक्तम् । यदि आकृतिपक्षमाश्रित्य विचार्यन्ते चेत् प्रयोजनं नास्ति यतो हि ग्रहणकशास्त्रस्य प्रत्याख्यानात् अत्वजातित्वेन बोधः कर्तुं शक्यते केषामाचार्याणामाशयः किन्तु विवारप्रयत्नभेदस्य सत्वात् विवारयति विकासयति वा आस्यमिति विवारः प्रयत्नः व्यक्तिपक्षे तु ग्रहणकशास्त्रारम्भस्य सत्वात् दोषापत्तिः। यदि विवारभेदात् कथ्यते तर्हि कालभेदोऽपि आपतति अत एव **तुल्यास्यप्रयत्नं सवर्णम्**7 सूत्रे आस्यप्रयत्नमित्यत्र समासः आस्यञ्च

प्रयत्नश्च आस्यप्रयत्नौ तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत् तुल्यास्यप्रयत्नमिति द्वन्द्वगर्भबहुब्रीहिः प्रतिपादयितुं शक्यते आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसञ्ज्ञा भवन्ति इति । अनेन सूत्रेण बाह्यत्वं नाभिप्रदेशे विशिष्टप्रयत्नारम्भद्दीर्घादिव्युत्पत्या नाभेः अस्यात् बाह्यत्वात् कालस्य बाह्यत्वम् । तथैव विवृतप्रयत्नादीनां चास्यवर्तिप्रयत्ननिष्पाद्यत्वात् आभ्यन्तरत्वम् ।

विवृतोपदेशः कर्तव्यः इति उक्त्वा प्रयोजनं विचार्यते अथवा संवृतप्रयत्नविषये अनूद्य विवृतप्रयत्नस्य उपदेशः तस्यैव अन्वाख्यानमिति यतो हि पूर्वमेव कथितश्च पाणिनिना अ अ सूत्रं व्यरचि सूत्रानुशासने विवृतप्रयत्नस्य संवृतप्रयत्नं बोधयति आचार्यः । इतोऽपि प्रयोजनं वर्तते यथा अतिमालः , अतिखट्वः आनन्तर्येण विवृतप्रयत्नस्य विवृतप्रयत्नः स्यादिति कुत्रापि लोके वेदे विवृतप्रयत्नस्तु नास्ति तस्मादेव विवृतोपदेशः निर्दिष्टः आचार्येण । अइउण् इत्यत्र अकारस्य विवृतोपदेशः भवति चेत् अन्यत्रापि धातुप्रातिपदिकप्रत्ययनिपातस्थलेषु सवर्णग्रहणार्थं हि उपदेशः कर्तव्यः किन्तु अक्षरसमाम्नायिकेन अस्य ग्रहणं भवितुमर्हति इति वक्तुं न शक्यते यतः विवारभेदात् संवृतप्रयत्नस्य सत्वात् न भवति। शाम्यति इत्यादिस्थलेषु दीर्घत्वं यथा स्यात् एदर्थमेव सर्वत्र विवृतोपदेशः कर्तव्यः किन्तु आचार्याणां प्रवृत्तिः बोधयति अक्षरसमाम्नायिकेन धात्वादिस्थानां सर्वेषां ग्रहणं भवति यथा **अकः सवर्णे दीर्घः**8 अत्र दीर्घकार्ये अक् प्रत्याहारग्रहणे सति प्रक्रियायां द्वयोः अकारयोः दीर्घत्वं सिध्यति न तु अक्षरसमाम्नायिके अकारद्वयं निर्दिष्टं तर्हि आचार्याणां सूत्रप्रवृत्या ज्ञायते यत् धात्वादिस्थानां सर्वेषामपि ग्रहणं अइउण् घटकाकरस्य विवृतोपदेशेन हि सिध्यति । मालाढकमिति खट्वाढकमित्यत्र इत्यत्र दीर्घत्वं यथा स्यात् एतदर्थमपि वर्तते किन्तु विवृतोपदेशः यथा भवति तथैव संवृतोपदेशः किमर्थं नेति अनयोः कः विशेषः वर्तते । वस्तुतः यानि प्रतिपदिकानि सन्ति तेषां यदि तथैव विवृतोपदेशः क्रियते चेत् गौरवं स्यात् प्रतिपदपाठेन उपदेशः सम्भवमेव नार्हति तर्हि धात्वादिस्थानामपि विवृतप्रयत्नमपि अक्षरसमाम्नायिकेन बोध्यम् । केचित् वदन्ति दीर्घप्लुतवचने कदाचित् संवृतप्रयत्नस्य निवृत्तिः स्यात् एतदर्थं विवृतोपदेशः कर्तव्यः अर्थात् दीर्घप्लुतौ संवृतप्रयत्नौ न स्याताम् वृक्षाभ्याम् रामा

इत्यादिस्थलेषु प्लुतस्थलेषु संवृतप्रयत्नः न स्यात् अन्यथा प्रयोगासिद्धिः महाभाष्यकारेण कथितञ्च **दीर्घप्लुतवचने च संवृतनिवृत्यर्थः**9 किन्तु वस्तुतः सिद्धान्ते कश्चित् दोषः नास्ति कुत्रचिदपि दीर्घप्लुतौ संवृतप्रयत्नौ न स्तः विवृतप्रयत्नौ एव भवतः तर्हि केचिद् वदन्ति एकदेशिनः तन्न सम्यक् अन्यथा कृत्वा सन्देहः अन्यथैव समाधानमिति तेषामाशयः।

विवृतप्रयत्नस्य उपदेशः सवर्णग्रहणार्थमिति व्याख्यातमेव पूर्वम्। यतो हि तुल्यास्यप्रयत्नं सवर्णम् सूत्रे तुल्यौ आस्यप्रयत्नौ इति विग्रहे प्रयत्नस्य साम्यत्वादेव सवर्णसञ्ज्ञा कल्पते प्रयत्नभेदाच्च कदापि सवर्णसञ्ज्ञा नैव भवितुमर्हति तथैव स्थानसाम्यं भवति चेत् सवर्णसञ्ज्ञा स्थानेऽन्तरतमः सूत्रे स्थानग्रहणसामर्थ्यात् स्थानकृतान्तर्यमेव बलीयान् इत्यपि सङ्गच्छते अनेन व्याख्यानेन प्रक्रियाविशेषरूपेण निर्वाहो यथा स्यात् एतदर्थमेव विवृतप्रयत्नोपदेशस्य प्रयोजनमिति। अक्षरसमाम्नायिके अकारस्य विवृतप्रयत्नस्य उपदेशात् अन्यत्र **अस्य च्वौ**10 इत्यादिस्थलेषु कथं प्राप्तिः स्यात् यतो हि अकः सवर्णे दीर्घः इत्यत्र ककारानुबन्धं दृष्ट्वा अनुमीयते अनुकृतोऽयमकारः किन्तु यस्येति च अस्य च्वौ इत्यादिस्थलेषु अण् अभावात् कथं प्रक्रिया निर्वाहः भवेदिति आशङ्क्य यद्यपि अयमकारः एकः तदेव धात्वादिस्थानामपि बोधः करणीयः कदाचित् अनुबन्धसङ्करः प्राप्नोति यतः कर्मण्यण् आतोऽनुपसर्गे कः इत्यनयोः अनुबन्धः णित् कितश्च भवति तर्हि साङ्कर्यमेव तदेव महाभाष्यकारेण कथितम् **अनुबन्धसङ्करस्तु**11 इतोऽपि अयमकारः एकः यस्य विवृतोपदेशः स्वीकृतः तर्हि न हि लोके एकेन घटेन युगपद् कार्यं कुर्वन्ति जनाः तर्हि पृथक् पृथक् घटमाधारीकृत्य कार्यं भवति तथैव अयमकारः युगपद् कथं सर्वत्र उच्चारणं स्यात् एवमेव पूर्वपक्षवादिनः कथयन्ति तस्य अनुबन्धसङ्करविषये भाष्ये कथितं **विषयेण नानालिङ्गकरणात् सिद्धम्**12 पाणिनिना सूत्रेषु नाना चिन्हमनुबन्धरूपं योजितं तेन ज्ञायते अनुबन्धसङ्करोऽयं दोषः नास्ति यतो हि तथा स्यात् आचार्याणां सूत्राप्रमाण्यापत्तिः आपद्येत किन्तु आचार्य सूत्रशैल्या विज्ञायते यत् नायं दोषः यच्च वदन्ति युगपद् एकस्य अकारस्य उच्चारणं कथं स्यादिति तर्हि कथ्यते सति सम्भवे कार्यमनेकोऽपि युगपदेव भवति यथा घटस्य दर्शनं स्पर्शनं युगपदेव व्यवह्रियते तथैव अकारोच्चारणं सति सम्भवे भवत्येव भाष्यटीकाकारेण कथितम्

**एकस्यैव अकारस्य युगपत् स्थानकरणनिष्पन्नध्वनिव्यङ्ग्यत्वात्सर्वैरुच्चारणं शक्यम्**13 काव्यवधानात् असंहितापाठः दृश्यते अक्षरसमाम्नायिकेषु अइउण् इत्यत्र असंहितापाठः अत्र कालव्यवधानात् न भवति संहिता । शब्दव्यवधानादपि अवलोक्यते यथा दण्डः अत्र आद्यन्तयोः अकारःभिन्नः णकारशब्दव्यवधानात् तर्हि अयमकारः एकः युगपद् प्रवृत्तिः सर्वत्र दृश्यते व्यवहारे अश्वः, अर्कः, अर्थः एककालावच्छेदेन अकारः पृथक् पृथक् स्थानेषु उपलभ्यते तर्हि व्यक्तिपक्षेऽपि अस्य नानात्वं सङ्गच्छते ।

वस्तुतः अष्टादश अकारः इति व्यक्तिपक्षे अइउण् इति यदि जातिपक्षं स्वीक्रियते तर्हि अणुदित्सवर्णसूत्रे अण् ग्रहणस्य वैयर्थापत्तिः। व्यक्तिपक्षे अस्य च्वौ इत्यादिस्थलेषु सवर्णग्रहणानुपपत्तिः इति महती समस्या । अतः सूत्रकारस्य आशयः दुर्वच इति तर्हि सूत्रोपपत्तिः कर्तव्या तथाहि अयमकारः तु एकः एव प्रतिज्ञाबलाद् । अकारधर्मव्यवस्थापनाय कुत्र अण् कार्यं न प्राप्नोति सवर्णसञ्ज्ञा चेत् अप्रत्ययादिविधिस्थले दीर्घप्रवृत्तिः न तथा अस्य च्वौ इत्यत्र विधिसूत्रात् शुक्लीभवति इत्यादिस्थलेषु न प्रवृत्तिः स्यात् तदा ग्रहणकशास्त्रं क्रियते। तच्च सावर्ण्याधीनमिति ह्रस्वस्य विवृतत्वं प्रतिज्ञायते । अस्य च्वौ इत्यादौ अण् अभावात् ग्राहकत्वं न स्यादिति चेत् विवृतप्रयत्नह्रस्वादेः सामान्यतया अण् इत्यस्य सत्वात् । इमे वर्णा तर्हि **शकुनिवत्स्युः**14 इति भाष्ये व्याख्यातम् आशुगामी पुरस्तात् उत्पतिताः अन्नतरमेव दृश्यन्ते तथैव अयमकारः अत्र अवलोक्यते श्रावणप्रत्यक्षश्च जायते अनेन कर्तुं न शक्यते अनित्यत्वापत्तिः वर्णाः शब्दाः नित्याः तर्हि कूटस्थाविचालिभिः वर्णैः कथं गम्यते अत्र अकारः पश्चात् अकारः नित्यत्वं भज्जेत कूटस्थाभावात् । व्यक्तिस्फोटवादिनः कालशब्दाभ्यामेव व्यञ्जकवर्णानां ध्वनिव्यवायः । वस्तुतः व्यङ्ग्यस्य नास्ति एतादृशः इति कथयन्ति । व्यक्तिस्फोटविषये तावद् पृथक् पृथक् स्वीकरे सति तदा बोधः । तर्हि एते इमे वर्णाः आदित्यवत् भवेयुः सूर्यः एकः अनेकाधिरणस्थः एककालाच्छेदेन युगपद् पृथक् पृथक् अधिकरणेषु उपलभ्यते तथैव अकारोऽपि भिन्नभिन्नाधिकरणेषु उपस्थिति बोध्या , शब्दानां स्थानं तु वस्तुतः अकाशः श्रोत्रोपलब्धिर्बुद्धिर्निर्ग्राह्यः प्रयोगे सति स्फुटति महाभाष्यकारेण कथितञ्च आकृतिग्रहणात् सिद्धम्

अत्वावच्छेदेन सर्वेषामकाराणां ग्रहणं तथैव इवर्णोवर्णोऽपि अकारस्य विवृतोपदेशस्य प्रयोजनं सुस्पष्टमेव वर्तते यत् अत्र सवर्णग्रहणं प्रक्रिया निर्वाहो यथा स्यात् ।

1. वाक्यपदीयम् ब्रह्मकाण्ड पृष्ठसंख्या 80
2. वैयाकरणसिद्धान्तकौमुदी प्रथमोभागः पृष्ठसंख्या 18
3. वैयाकरणसिद्धान्तकौमुदी प्रथमोभागः पृष्ठसंख्या 23
4. वैयाकरणसिद्धान्तकौमुदी प्रथमोभागः पृष्ठसंख्या 18
5. वैयाकरणसिद्धान्तकौमुदी प्रथमोभागः पृष्ठसंख्या 19
6. महाभाष्यं प्रत्याहाराह्निकं श्रीगुरूप्रसादशास्त्रिसम्पादनं पृष्ठसंख्या 79
7. वैयाकरणसिद्धान्तकौमुदी प्रथमोभागः पृष्ठसंख्या 16
8. अष्टाध्यायीग्रन्थः गोपालदत्तपाण्डेयः सम्पादकः षष्ठाध्यायः प्रथमः पादः पृष्ठसंख्या 71
9. महाभाष्यं प्रत्याहाराह्निकं श्रीगुरूप्रसादशास्त्रिसम्पादनं पृष्ठसंख्या 86
10. अष्टाध्यायीग्रन्थः गोपालदत्तपाण्डेयः सम्पादकः षष्ठाध्यायः प्रथमः पादः पृष्ठसंख्या 91
11. महाभाष्यं प्रत्याहाराह्निकं श्रीगुरूप्रसादशास्त्रिसम्पादनं पृष्ठसंख्या 88
12. महाभाष्यं प्रत्याहाराह्निकं श्रीगुरूप्रसादशास्त्रिसम्पादनं पृष्ठसंख्या 89
13. महाभाष्यं प्रत्याहाराह्निकं श्रीगुरूप्रसादशास्त्रिसम्पादनं प्रदीपः पृष्ठसंख्या 92
14. महाभाष्यं प्रत्याहाराह्निकं श्रीगुरूप्रसादशास्त्रिसम्पादनं पृष्ठसंख्या 94

# श्रीशङ्करभगवत्पादविरचितसौन्दर्यलहर्याम् अलङ्कारसौन्दर्यम्

**डा. एस्. एन्. कोटियाल**

महाकवित्ववेदान्तित्वयोः अभूतपूर्वं सामानाधिकरण्यं दृश्यते शङ्करावतारभूतेषु श्रीशङ्करभगवत्पादेषु । यद्यपि तेषां सर्वा अपि कृतयः एतस्योदाहरणानि भवन्ति तथापि जगन्मातुः पुत्रत्वेन आत्मानं सम्भाव्य लिखितायां सौन्दर्यलहर्याम् भगवत्पादानां महाकवित्वं पारेवाचमिति वक्तव्यं भवति । तत्रापि शब्दार्थालङ्काराणां सौन्दर्यं तु अत्यपूर्वं दृश्यते । अतः सौन्दर्यलहर्यां भगवत्पादप्रयुक्तालङ्काराणां सौन्दर्यविषये किञ्चिदत्र प्रस्तौमि ।

काव्यसौन्दर्यवर्धकेष्वग्रं स्थानमलङ्काराणाम् । साहित्यशास्त्रस्य षट् प्रस्थानेषु अलङ्कारप्रस्थानमन्यतमम् । मानवशरीरसौन्दर्यवर्धककटककुण्डलादिसादृश्येन अनुप्रासोपमादयः शब्दार्थालङ्कारा अपि अलङ्कारशब्दैर्व्यवह्रियन्ते । न कान्तमपि निर्भूषं विभाति वनितामुख-मित्युक्त्वा[1] भामहः काव्ये आत्मभूतस्य रसस्य, तद्धर्मभूतगुणानां, ध्वन्यौचित्याद्यंशानां सत्त्वेऽपि अलङ्कारं विना काव्यसौन्दर्याभावं प्रतिपादयामास । चन्द्रालोककारोऽपि-

> अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।
> असौ न मन्यते कस्मादनुष्णमनलं कृती ॥ [2]

इत्युक्त्वा काव्येऽलङ्काराणां सर्वश्रेष्ठं स्थानं दत्तवान् । किन्त्वलङ्कारशास्त्रप्रमाणभूता आनन्दवर्धन-मम्मटाचार्यादयः रसस्यैव सर्वप्राधान्यं दत्त्वा अलङ्कारस्य स्थानं परिमितमकुर्वन् । तथापि गहनस्यापि विषयस्य झटिति विशदीकरणेनालङ्काराः काव्ये महत्त्वपूर्णं स्थानं प्राप्नुवन्तीत्यत्र न कस्यापि विमतिः ।

एवं सति वर्णनानिपुणस्य कवेः कर्म अलङ्कारैर्विना कथं निर्वर्तितं स्यात् ? सौन्दर्यलहर्यां शङ्करभगवत्पादैः प्रतिपाद्यविषयोपकारकत्वेनानेकेषामलङ्काराणामलङ्कारत्वं संसाधितम् । प्रतिपाद्यः काव्यात्मभूतो रसादिः तत्परिपोषका अलङ्कारा रससमाहितचित्तस्य कवेः अपृथग्यत्ननिर्वर्त्याः भवेयुरित्यानन्दवर्धनाचार्यः स्पष्टतया प्रतिपादयति-

> रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
> अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ [3]

---

[1] भामहः काव्यालङ्कार, १/१३
[2] चन्द्रालोक-१/८

इति । तत्र यमकानुप्रासादिशब्दालङ्काराणां अपृथग्यत्ननिर्वर्त्यत्वं न सम्भवतीति हेतोः तेषां रसपोषकत्वं स्पष्टतया निराकृतञ्च-

शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात् ।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥[4]
ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥[5]

यद्यपि शृङ्गाररससम्बद्धतया एव उक्तमानन्दवर्धनेन तथापि शृङ्गारस्य यः स्थायीभावः वर्तते 'रतिः' सैव देवादिविषया भवति चेत् भावः भवति । सैव भक्तिरित्युच्यते । रतेः माधुर्यादेव शृङ्गारस्यापि माधुर्यम् । अतः रतेरपि माधुर्यात् तन्मूलः 'भक्ति'भावेऽपि मधुर एव । तेन तत्रापि एताद्रुशशब्दालङ्कारा परिहरणीया एव भवन्ति ।

आनन्दवर्धनाचार्यादपि पूर्वमेव काव्यानि विरचितवद्भिः कालिदासादिभिः ज्ञातमेवैतत्तत्वमिति शब्दालङ्काराणां प्रयोगः यावच्छक्यं तावत्परिहृतमेव । किन्तु परमाश्चर्यमिदं यत् अन्यकाव्यरचनाकारैः स्वकाव्येष्वदत्तं स्थानं (दातुमिच्छद्भिः) परमकारुणिकैः शङ्कर-भगवत्पादैः शब्दालङ्काराणामपि स्थानं दत्त्वा तेषां रसपोषकत्वं संसाधितमिति । सामान्यतः देवादिविषया रतिरेव आचार्याणां काव्येषु व्यज्यते । तत्र व्यज्यमानदेवताविषयकरतेरभिव्यक्तौ यथा शब्दालङ्कारा विरोधिनो न भवेयुः तथा तेऽलङ्कारा उपनिबद्धाः । एवमाचार्यैरुपकृताः सन्तः तेऽलङ्कारा स्वेषां रसविरोधित्वं विहाय रस(भाव)पोषकत्वद्वारा, तेषु कार्तज्ञ्यं समर्पयन्तीव भान्ति । उदाहरणार्थम्-

नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजम्
अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् ।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां
तमेकदन्तमेकमेव चिन्तयामि सन्ततम् ॥ [6]

आचार्याणां गणेशविषयकरतिभावस्य पोषकत्वेनात्रानुप्रासः विलसतीत्यत्र को वा विवदेत् ?

---

[3] ध्वन्यालोकः-२/३९
[4] ध्वन्यालोकः-२/३७

[5] ध्वन्यालोक-२/३८
[6] महागणेशपञ्चरत्नस्तोत्रम्

तथैव स्वरचितायां सौन्दर्यलहर्यामपि मातुः स्वरूप-सौन्दर्य-महिमादीनां वर्णने पर्याप्ततया शब्दालङ्काराः यमकानुप्रासादयः शोभन्ते । अपि च तेषां हृद्गतं भावं सुस्पष्टतयाऽभिव्यञ्जयन्ति । उदाहरणार्थम्-

**वृत्त्यनुप्रासः-**

नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणां ते कान्तिं कथय कथयामः कथमुमे
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम् ॥ [7]

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयः पारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ [8]

## यमकम्

सौन्दर्यलहरी-२१, ६७

तटिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ [9]

एवं शब्दालङ्काराणामपि काव्यरसपोषकत्वं साधितवतामाचार्याणामर्थालङ्कारप्रयोगविषये किं वा वक्तव्यम् । काव्यग्रन्थेषु अधिकतया कामिन्यादीनां सौन्दर्यवर्णनायोपयुज्यमानानामलङ्काराणां कलङ्कं परिहर्तुकामा इव आचार्याः देव्या वर्णने तेषां सार्थक्यं सम्पादितवन्तः । देवीविषयकरतिभावसमाहितचित्तानामाचार्याणाम्

---

[7] सौन्दर्यलहरी-७१
[8] सौन्दर्यलहरी-७५
[9] सौन्दर्यलहरी-श्लोक-२१

पृथग्यत्नेन विनैव अहमहमिकया सहजतया प्रयुक्तानां तेषामवलोकनेन विस्मरामो वयं ते वेदान्तित्वम् । यतोऽनेकेषु श्लोकेषु न केवलमेक एवालङ्कारः किन्त्वनेकेऽलङ्कारा विलसन्ति ।

तत्र मङ्गलश्लोक एव समासोक्ति-परिकर-परिकराङ्कुर-काव्यलिङ्गरूपैः चतुर्भिरलङ्कारैः भगवत्याः सर्वोत्कृष्टत्वमाचार्यैः प्रतिपादितम्-

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरि-हर-विरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ [10]

**परिकरः –अलङ्कारः परिकरः साभिप्राये विशेषणे ।** [11]

शक्त्या युक्तत्वादिविशेषणानां साभिप्रायत्वात् परिकरालङ्कारः । शक्त्या युक्त इत्येतदनन्यगतिकत्वाभिप्रायकम् । हरिहरविरिञ्च्यादिभिरप्याराध्यत्वरूपं देव्या विशेषणं तस्या सर्वोत्कृष्टत्वाभिप्रायकम् । अकृतपुण्यत्वरूपं विशेषणं स्वस्य कृतपुण्यत्वाभिप्रायकम् ।

**परिकराङ्कुरः-साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।** [12]

अत्र शिव-शक्तीत्यादीनां विशेष्यपदानामभिप्रायगर्भत्वात् परिकराङ्कुरालङ्कारः । शिवशब्दस्यात्र इच्छाशक्त्याश्रयत्व-स्वयंप्रकाशत्व-जाड्यरहितत्व-अविद्यानिर्मुक्तत्वाद्यभिप्रायगर्भत्वम् । शक्तिशब्दस्य च जगन्निर्माणशक्तत्वमभिप्राय इति विशेष्यपदानामभिप्रायगर्भता ।

**समासोक्तिः-समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।** [13]

पूर्ववाक्ये शिवशक्त्योः जाय-पतिन्यायात् नित्यशृङ्गारेण लौकिकनायक-नायिकयोः व्यवहारः प्रतीयत इति समासोक्तिः ।

**काव्यलिङ्गम्-काव्यलिङ्गं हेतोर्वाक्यपदार्थता** [14]

---

[10] सौन्दर्यलहरी-श्लोक-१
[11] काव्यप्रकाश-उल्लस-१०
[12] काव्यप्रकाश-उल्लस-१०
[13] काव्यप्रकाश-उल्लास-१०

हेतोर्वाक्यार्थत्वपदार्थत्वयोरन्यतरत्वे काव्यलिङ्गालङ्कारो भवति ।

अत्र पूर्ववाक्यस्योत्तरवाक्यं प्रति हेतुत्वात् हेतोर्वाक्यार्थत्वरूपं काव्यलिङ्गम् । क्वचिच्छ्लेषोऽपीति सर्वं रमणीयम् ।

**उपमालङ्कारः**

साधर्म्यमुपमा भेदे । उपमानोपमेययोरेव, न कार्यकारणयोः साधर्म्यं भवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा । [15]

अमू ते वक्षोजावमृत---॥[16]

अस्मिन् श्लोके देव्याः दिव्यौ स्तनौ अमृतरसपूर्णमाणिक्यकलशयोरुपमितौ ।

भुजाश्लेषान्नित्यं----॥ [17]

तव ग्रीवा धत्ते मुखकमलनालश्रियमियमित्यत्र ग्रीवायाः मुखकमलनालस्य चोपमानोपमेयभावः स्पष्टः ।

**रूपकालङ्कारः**

तद्रूपकमभेदो य उपमानोपमेययोः । अतिसाम्यादनपह्नुतभेदयोरभेदः । [18]

उपमालङ्कारस्योदाहरणत्वेनोदाहृते भुजाश्लेषान्नित्यमित्यादौ श्लोके मुखकमलमित्यत्र हारलतिकेत्यत्र च रूपकम् ।

हरक्रोधज्ज्वाला-----॥ [19]

क्रोधज्ज्वालेत्यत्र रूपकम् ।

करग्राह्यं शम्भो---॥ [20]

---

[14] काव्यप्रकाशः, दशमोल्लासः

[15] काव्यप्रकाश-१०/८७ कारिकायाः प्रथमपादः तद्वृत्तिभागश्च ।

[16] सौन्दर्यलहरी-श्लोक-७३

[17] सौन्दर्यलहरी-श्लोक-६८

[18] काव्यप्रकाश-१०/९१ कारिकायाः पूर्वार्द्धः, तद्वृत्तिभागश्च ।

[19] सौन्दर्यलहरी-श्लोक-७६

[20] सौन्दर्यलहरी-श्लोक-६७

अत्र मुखमुकुरवृन्तमित्यत्र रूपकम् ।

**उत्प्रेक्षालङ्कारः**

सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् । [21]

गले रेखास्तिस्रो-----॥ [22]

यदेतत्कालिन्दी--- ॥ [23]

**अतिशयोक्तिः**

निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।

प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥

कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।

विज्ञेयाऽतिशयोक्तिः सा ---------------॥ [24]

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणाम्
इति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥ २२ ॥

भवानि त्वमिति अर्धस्तुतिवाक्यकथनसमये एव तस्मै भक्ताय निजसायुज्यपदवीं दिशसि इति अतिशयेन कथनात् अतिशयोक्तिरलङ्कारः ।

**निदर्शना**

**निदर्शना अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।** [25]

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन्विरचयति लोकानविकलम् ।

---

[21] काव्यप्रकाश-१०/९२ कारिकाया पूर्वार्द्धः ।
[22] सौन्दर्यलहरी-श्लोक-६९

[23] सौन्दर्यलहरी-श्लोक-७७

[24] काव्यप्रकाश-१०/१००, १०१
[25]काव्यप्रकाशः- दशमोल्लासः

वहत्येनं शौरिः कथमपि सहस्रेण शिरसा
हरः सङ्क्षुद्यैनं भजति भसितोद्धूलनविधिम् ॥ [26]

भगवत्याः पादरेणुं हरः संक्षुध्य विभूतिवत् भजति । अत्र बिम्बप्रतिबिम्बभावात् निदर्शना ।

**व्यतिरेकः**

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।** [27]

त्वदन्यः पाणिभ्यामभयवरदो दैवतगण
स्त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात्त्रातुं दातुं फलमपि च वाञ्छा समधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ [28]

अभयवरप्रदानरूपैकधर्मसत्वेऽपि भगवती प्रकटिताभयवरदहस्ता नास्तीति न्यूनत्ववर्णनेन व्यतिरेकालङ्कारः ।

**सङ्करः**

त्वदन्यः----इत्यादौ श्लोके व्यतिरेक-काव्यलिङ्गयोः अङ्गाङ्गिभावेन सङ्करः ।

**असङ्गतिः**

**आख्याते भिन्नदेशत्वे कार्यहेत्वोरसङ्गतिः** [29]

अमरललनाः गिरिशसायुज्यपदवीं प्राप्नुवन्ति तेन भगवत्याः सुन्दररूपं पश्यन्तीति कार्यकारणयोः भिन्नदेशत्वमुक्तत्वात् असङ्गतिरलङ्कारः ।

एवमेव ‘यत् सर्वत्र सालङ्कारौ---’ इत्येनां मम्मटस्योक्तिं निदर्शयन्त इवभगवत्पादाः प्रतिपदमपि सालङ्कृतमेव कृतवन्त इव भाति ।

---

[26] सौन्दर्यलहरी-श्लोक-२
[27] काव्यप्रकाशः- दशमोल्लासः
[28] सौन्दर्यलहरी-श्लोक-४
[29] चन्द्रालोकः ५/७८

# अद्वैतदिशा
# चतुर्णां महावाक्यानां सारः

**जनार्दन - सुवेदी**
**सहायकप्राध्यापकः(अतिथिः)**
**केन्द्रीयसंस्कृतविश्वविद्यालयः,**
**श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः,उत्तराखण्डः।**

धर्मार्थकाममोक्षेषु नित्यत्वात् निरतिशयसुखशालित्वाद्वा मोक्षस्य परमपुरुषार्थत्वं स्पष्टम् । स च मोक्षः ज्ञानादेव लभ्यते, नान्येनोपायेनेति अद्वैतवेदान्तडिण्डिमः,**"नान्यः पन्था विद्यतेऽयनाय"**[1] इत्यादिश्रुतेः । स च तत्त्वबोधः विवेकवैराग्यादिनाभ्युपेत्यः । तत्रापि विशेषतः पदार्थशोधनमन्तरा वैराग्यादिमात्रेण तत्त्वबोधाऽसंभवात् सत्पदार्थनिरूपकाणि सकलवेदार्थसारभूतानि महावाक्यानि अवश्यं व्याख्येयानि । ऐतरेयादावपि **"आत्मा वा इदमेक एवाग्र आसीत्"**[2] इत्यादिश्रुतिभिः कस्यचिन्निरूपाधिकस्य तत्त्वस्य निरूपणानन्तरं "स **एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत"**[3] इत्यादौ सोपाधिकं ब्रह्म व्याख्यातम् । एवं लोकानुभवे अहं स्थूलः, अहमिच्छावानित्यादौ स्थौल्यगुणेच्छादिवत्ताप्रतीतिः भवति । एवं स्थिते "कोऽयमात्मेति वयमुपास्महे " सोपाधिको वा निरूपाधिको वा ? अणुर्वा महान् वा ? नित्यो वाऽनित्यो वा ? इत्यादिप्रश्नाः स्वतः जाग्रति, तेषां समाधानाय महावाक्यानां विवेचनमावश्यकं भवत्येव ।

तत्र विशिष्टार्थबोधकपदसमुदायो वाक्यम्, महच्च तद्वाक्यं महावाक्यम्। वाक्ये महत्त्वं च सर्ववेदान्तसारभूतब्रह्मात्मैक्यप्रतिपादकत्वरूपम्, आत्यन्तिकदुःखनिवर्तकत्वरूपम् वा । यद्यपि पूर्वमीमांसायां व्याकरणादौ चान्यथा महावाक्यस्य प्रतीतिस्तथाप्यत्र न तथात्वमपि त्वत्र ह्यर्थे महत्ताऽपेक्षिता, न शरीरे । अतः महत्त्वविशिष्टार्थप्रतिपादकत्वविशिष्टवाक्यत्वं महावाक्यत्वम् । अत्र च सिद्धान्ते द्वैतभ्रम एव महान् अनर्थ इति तस्य निवर्तकत्वे वाक्ये महत्ता सेत्स्यति, तस्माद् द्वैतभ्रमनिवर्तकत्वे सति वाक्यत्वम् महावाक्यत्वमिति परम्परायाम् श्रूयते । महावाक्येन अखण्डार्थस्य बोधो जायते, अखण्डार्थत्वञ्च संसर्गाऽविषयकत्वम् । यथोक्तम् -

**संसर्गाऽसङ्गिसम्यग्धीहेतुता या गिरामियम् ।**
**उक्ताऽखण्डार्थता यद्वा, तत्प्रातिपदिकार्थता ।।**[4] इति

एवञ्च सम्बन्धाविषयकयथार्थज्ञानजनकं वाक्यं महावाक्यम् इति सिध्यति, तादृशं च ज्ञानम् जीवब्रह्मैक्यरूपमिति जीवब्रह्मैक्यप्रतिपादकं वाक्यम्, तदर्थत्वमर्थयोरेकत्वबोधकं वाक्यम् महावाक्यम् इति वक्तुं शक्यते, एतदतिरिक्तं वाक्यमवान्तरवाक्यम्, तच्च केवलं जीवं, ब्रह्म वा निरूपयति, न पुनस्तयोरैक्यमिति ।

चतुर्णामपि वेदानामेकैकं महावाक्यमिति तेषां चतुष्टयत्वम् । **ऋग्वेदस्य - प्रज्ञानं ब्रह्म । यजुर्वेदस्य - अहं ब्रह्मास्मि । सामवेदस्य - तत्त्वमसि । अथर्ववेदस्य - अयमात्मा ब्रह्म ।** तेषां सङ्क्षेपतो विवरणमत्र प्रस्तूयते ।

१) **प्रज्ञानं ब्रह्म** –

घटितबुद्धौ घटकज्ञानं कारणम् इति न्यायेन वाक्यघटकपदार्थनिरूपणानन्तरं वाक्यार्थो निरूप्यः । अयमेव च नव्यन्यायानुसारी पन्थाः । तथा चात्र प्रथमतः प्रज्ञानपदार्थो निरूप्यते। तत्र प्रज्ञानं जीवात्मा, औपाधिक आत्मा । अन्तःकरणावच्छिन्नचैतन्यं जीवः। चक्षुरादितत्तदिन्द्रियसम्पृक्तान्तःकरणवृत्तिप्रतिबिम्बितेन जीवचैतन्येनैव लोके चाक्षुषादिज्ञानं जायते। अत ऐतरेये उक्तम् -

[1]श्वेताश्वेतरोपनिषतद् ६–१५

[2]ऐतरेयोपरिषद् १–१–

[3]ऐतरेयोपरिषद् १–१२

[4] वेदान्तपरिभाषा

**संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः, सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ।**[5] इति ।

अयमेवार्थः पञ्चदशीकृता सङ्क्षेपत उक्तः -

**येनेक्षते श्रृणोतीदं जिघ्रति व्याकरोति च ।**
**स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितम् ।।**

[6] वेदान्ते ज्ञानस्य प्रक्रिया तु प्रसिद्धैव, इन्द्रियसम्बन्धान्तःकरणवृत्तिप्रतिबिम्बितं चैतन्यमेव ज्ञानम्, तदवच्छेदकत्वाद्वृत्तौ ज्ञानत्वोपचार इति । एवञ्च प्रज्ञानपदार्थो जीवः ।

ब्रह्म च चतुर्मुखामरनराश्वादिषु सर्वत्र व्याप्तमेकरसं चैतन्यम् । चतुर्मुखाद्युपाधिभेदेऽप्युपाधिपरित्यागे एकमेव चैतन्यं सर्वत्र भाति । एवञ्च व्यापकत्वात्तदेव चैतन्यं ब्रह्मपदवाच्यतां भजते । आरोपाच्च तत्रानेकधा प्रतीतिः । रज्जाविव सर्पभूच्छिद्रादयः, रज्जुज्ञाने सर्पादिनामीव च ब्रह्मज्ञाने आरोपितोपाधीनां बाधः । एवञ्च आरोपितजगदध्यासाधिष्ठानं ब्रह्म, तच्च सच्चिदानन्दस्वरूपम्, सच्चिद्रूपे अनुभूते एव, आनन्दात्मकता तु तस्य अविद्यावशादाच्छादिता भवतीति आनन्दरूपे ब्रह्मण्यारोपितपदार्थेषु दुःखभानम् । आरोपे सति निमित्तानुशरणम्, न तु निमित्तमस्तीत्यारोपः इति सिद्धान्तः । इत्थञ्च सर्वत्र भासमानं व्यापकं चैतन्यं ब्रह्म । यथोक्तं पञ्चदशीकृता -

**चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।**
**चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ।।**[7]

तथा च प्रज्ञानपदार्थो जीवः, ब्रह्मपदार्थो व्यापकचैतन्यमिति सिद्धम् । तत्राभेदसंसर्गः संसर्गमर्यादाभास्यः, ततश्चाभेदान्वयः - **`अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन पदेनोपस्थापितस्यैव संसर्गः संसर्गमर्यादया भासते´**[8] इति, `एकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति धर्मभेदः कारणम्´ इति वा गादाधरीयसिद्धान्तात् । तथा च प्रज्ञानपदवाच्यजीवाभिन्नं ब्रह्म इत्यर्थबोधः, अभेदसम्बन्धेन प्रज्ञानवद् ब्रह्म इति वा । इत्थञ्चेदं वाक्यं जीवब्रह्मैक्यं बोधयन्महावाक्यतां भजत्येव ।

न च प्रज्ञानब्रह्मणोरभेदाऽसंभवः, उपाधिपरित्यागे तत्संभवात्,असत्त्वविशिष्टभासमानानाम् उपाधीनां परित्यागे प्रज्ञानपदार्थोऽपि निर्विशेषचैतन्यम्, ब्रह्मपदार्थोऽपि तदेव । तथा च आकाङ्क्षायोग्यतादिकारणकलापशवलितत्वात् सामग्रीसत्त्वेऽवश्यं कार्यम् इति सिद्धान्तात् भवत्येवाभेदान्वबोधः । उपाधिमिथ्यात्वञ्च **"वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यम् "**[9] **"नेह नानास्ति किञ्चन"**[10] इत्यादिश्रुतेः श्रुतेश्च सर्वप्रमाणश्रेष्ठत्वात् ।

### २) तत्त्वमसि

सामवेदस्येदं महावाक्यम् । तातादेशेन गुरुकुलं प्राप्तः श्वेतकेतुर्गुरुकुलवासमाचर्य अनूचानमानी पितृसदनमाससाद । तत्र पित्रा **"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातमि**[11]"त्यादिपृष्टेऽपहृतगर्वः पुनः विद्यालाभाय पितरमुपससार । पिता चारुणिः सौम्यवचनैः "सदेव सौम्येदमग्र आसीत् " इत्यादिवचनैः सृष्टिप्रक्रियानिरूपणपुरःसरं परमरहस्यभूतमात्मतत्त्वमुपदिदेश । "भूय एव मा भगवान् विज्ञापयतु" इति प्रार्थयन्तं नवकृत्वः

---

[5]ऐतरेयोपनिषद्३–२

[6]पञ्चदशी ५–१

[7]पञ्चदशी ५–२

[8]व्युत्पत्तिवादः

[9]छा.उ,६–१–४

[10]बृहदारण्यकोपनिषद्४–४–१९

[11]छान्दग्योपनिषद् ६–१–३

सोदाहरणमुपदिदेश ।     तदेवोपदेशरूपम् "तत्त्वमसि" इति । अत्र पदत्रयम्, पदार्थश्चैकः । कथमिति चेत् ? उच्यते, तथा हि अत्र तत्पदार्थः परमात्मा, त्वंपदार्थः जीवः, असिना च तयोरैक्यमुच्यते विशेषणविशेष्यभावेन, सामानाधिकरण्येन लक्ष्यलक्षणभावेन वा । उक्तञ्च पञ्चदशीकृता -

**सामानाधिकरण्यञ्च विशेषणविशेष्यता ।**
**लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम् ।।**[12]

तत्र सामानाधिकरण्यविशेषणविशेष्यभावौ लक्षणाधीनौ, लक्ष्यलक्षणसम्बन्धस्तु मुख्य इति । तथा हि - तत्त्वमसि इत्यत्र, तत्पदार्थः=परोक्षत्वसर्वज्ञत्वादिविशिष्टं चैतन्यम्, त्वंपदार्थश्चापरोक्षत्वाल्पज्ञत्वादिविशिष्टं चैतन्यम्, असिना तयोरैक्यं श्रूयते, `दशमस्त्वससि´ इत्यादौ त्वंपदार्थदशमपदार्थयोरसिना इव । परमत्र तत्पदार्थत्वंपदार्थयोरैक्यं न संभवति, सर्वज्ञत्वाल्पज्ञत्वविशिष्टचैतन्ययोरभेदस्य बाधात्, न ह्यल्पज्ञः जीवः स्वं सर्वज्ञं मनुते इति । एवं स्थितेऽन्वयानुपपत्त्याऽत्र लक्षणा कर्तव्या । नात्र खलु नीलोत्पलमित्यत्र नीलोत्पलयोः अन्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभाववत् तदर्थत्वमर्थयोः विशेषणविशेष्यभावः संभवति, सर्वज्ञचैतन्यत्वविशिष्टमल्पज्ञचैतन्यम्, अल्पज्ञचैतन्यत्वविशिष्टं सर्वज्ञचैतन्यमिति प्रत्यक्षबाधात् । सर्वांशे विरोधाभावात् तत्त्वंपदयोः श्रवणेन तदर्थप्रतीतौ च नात्र गङ्गायाम् घोषः इतिवत् जहल्लक्षणा, नाप्यजहल्लक्षणेति भागत्यागलक्षणया अर्थात् जहदजहल्लक्षणया अत्र शाब्दबोधोऽभ्युपेयते । भागत्यागलक्षणा नाम पदार्थयोरेविरुद्धांशपरित्यागपूर्वकाऽविरुद्धांशग्राहिका । प्रकृते च सर्वज्ञत्वाल्पज्ञत्वरूपविरूद्धांशयोः परित्यक्तयोः सतोः तत्पदार्थोऽपि शुद्धचैतन्यम्, त्वंपदार्थोऽपि शुद्धचैतन्यम्, इदमेव च तत्त्वंपदार्थशोधनम् । इत्थं लक्षणाशोधितयोः तत्त्वंपदार्थयोः लक्ष्यलक्षणभावसम्बन्धेनैक्यबोधे बाधाभावः, लक्षणाश्रयणे च सति सामानाधिकरण्यविशेषणविशेष्यभावावपि संभवत एव । इत्थञ्चाखण्डचैतन्यरूपार्थबोधकत्वेन तत्त्वमसि इत्यस्य महावाक्यत्वम्।

**३) अहं ब्रह्मास्मि**

बृहदारण्यके विद्यमानं यदुर्वेदस्येदं महावाक्यम्, यद्यपि वेदक्रमेण `प्रज्ञानं ब्रह्म´ इत्यनन्तरमस्य निरूपणं कर्तव्यम्, तथापि तत्त्वमस्याद्युपदेशजन्यत्वादस्य तत्त्वमसीत्यनन्तरनिरूपणम् । अहं ब्रह्म अस्मि इति पदत्रयघटितमिदं महावाक्यम् । अत्रायंपदार्थः जीवः । तथा हि पञ्चदश्याम् -

**परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणी ।**
**बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ।।**[13]

व्यापकः परात्मा मनुष्याशरीरे बुद्धेः साक्षितया यदा स्फुरति, तदा स उपाधविशिष्टः जीवापरपर्यायः, अहमिति भासते इत्यर्थ। ब्रह्मशब्देन च स्वतः पूर्णः सजातीयविजातीयस्वगतभेदरहितः देशकालाद्यपरिच्छिन्नः परमात्मा गृह्यते । अस्मि इति पदेन अनयोरर्थयोरभेद उच्यते, `अहं मनुष्य अस्मि´ इत्यादौ अहंपदार्थमनुष्यार्थयोरस्मिना सामानाधिकरण्यमिव । उक्तमपि पञ्चदशीकारेण -

**स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ।**
**अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ।।**[14] **इति ।**

अयमत्रार्थः - गुरुदेवेवपदार्थशोधनपूर्वकं तत्त्वंपदार्थयोरुपदिष्टयोः शुद्धब्रह्मविषयिण्यखण्डा वृत्तिरुदिता सती तया प्रपञ्चकारणेऽज्ञाने बाधिते पटकारणतन्तुदाहे पटदाहवद् अखिले प्रपञ्चे बाधिते, चित्तवृत्तितत्फलितचैतन्ययोरपि बाधितयोरखण्डं ब्रह्मैवावशिष्यते । इत्थमखण्डार्थबोधकत्वेन अहं ब्रह्मास्मीति महावाक्यत्वं लभते ।

---

[12]नैष्कर्म्यसिद्धि ३–३

[13] पञ्चदशी ५–३

[14]पञ्चदशी ५–४

**४) अयमात्मा ब्रह्म**

आथर्व्वणवेदगतं माण्डूक्योपनिषत्स्थमिदं महावाक्यम्। `माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये´ इति मुक्तिकोपनिषद्। अत्र च अयंपदेन स्वप्रकाशकत्वेन अपरोक्षत्वम् उच्यते, आत्मपदेन जीवात्मा, उभयोश्च पदार्थयोः ब्रह्मसामानाधिकरण्यम्। यथा पञ्चदशीकारः -

**स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम्।**
**अहंकारादिदेहान्तात्प्रत्यगात्मेति गीयते ।।**
**दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते।**
**ब्रह्मशब्देन तद् ब्रह्म स्वप्रकाशात्मरूपकम्।।** [15]

अत्रेदं तत्त्वम् - आत्मशब्द जीवब्रह्मोभयसाधारणपरः, अयमित्यात्मविशेषणे अयंशब्देन स्वप्रकाशेन अपरोक्षत्वमुच्यते, सति च तस्मिन् अपरोक्षत्वविशिष्ट आत्मा जीव एवेति अयमात्मेतिपदद्वयेन सम्मीलितोऽर्थः जीवः, ब्रह्मपदार्थ उक्त पूर्वम्। एवं च अयमात्मा इति पदद्वयार्थलभ्यजीवरूपार्थस्य ब्रह्मरूपार्थेन सहाभेदान्वयबोधनादस्य महावाक्यत्वं सेत्स्यतीति।

इत्थञ्च इमानि चत्वारि जीवब्रह्मैक्यप्रतिपादकत्वादखण्डार्थबोधकत्वाद्वा महावाक्यानि । तत्त्वंपदार्थशोधनपूर्वकं महावाक्यार्थविचारणे च दुःखस्यात्यन्तिकनिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च सिध्यत इति शम्।

## सन्दर्भग्रन्थसूची


| क्र.सं | ग्नन्थनाम | लेखक एवं सम्पादकः | प्रकाशनम्- | प्रकाशन-तिथिः ई,सन्, |
|---|---|---|---|---|
| १ | व्युत्पत्तिवादः | गदाधरभट्टाचार्यः | चौखम्बा संस्कृत पुस्तकालयः | 20005 |
| २ | उपनिषद्भाष्यम् | सं.एस.सुब्रह्मण्यशास्त्री | दक्षिणामूर्तिमठ प्रकाशन वाराणसी | 2018 |
| ३ | वेदान्तसारः | सदानन्दयदतिः | दक्षिणामुर्तिमठप्रकाशन वाराणसी | 20010 |
| ४ | वेदान्तपरिभाषा | धर्मराजाध्वरिन्द्रः (डाँ.गजाननशास्त्री मुसलगांवकर) | चौखम्बा विद्याभवन वाराणसी | 2010 |
| ५ | तर्कसङ्ग्रहः | अन्नं भट्ट | चौखम्बा विद्याभवन वाराणसी | 2003 |
| ६ | पञ्चदशी। | श्रीविद्यारण्यमुनिः | चौखम्बा संस्कृत संस्थान वाराणसी। | 2016 |


[15]पञ्चदशी ५–८